* श्रीश्रीगौरगदाधरौ विजयेताम् *

सभाष्यः

# छन्दः कौस्तुभः

श्रीराधादामोदर-प्रभुपाद-विरचितः

श्रीहरिदास शास्त्री

मुद्रक ● प्रकाशक :

श्रीहरिदास शास्त्री

श्रीहरिदास निवास, कालीदह,

वृन्दावन, मथुरा, उत्तर प्रदेश।



प्रकाशन तिथि—

विजया दशमी, २९-९-९०

प्रथम संस्करण—१०००

प्रकाशन सहायता—

पञ्चविंशति मुद्रा,

❋ श्रीश्रीगौरगदाधरौ विजयेताम् ❋

# छन्दः कौस्तुभः

## श्रीराधादामोदर-प्रभुपाद-प्रणीतः

## श्रीमद् बलदेवविद्याभूषणकृत-भाष्योपेतः

श्रीधाम-वृन्दावन-वास्तव्येन न्यायवैशेषिकशास्त्रि-नव्यन्यायाचार्य काव्य व्याकरण सांख्य मीमांसा वेदान्त तर्क तर्क तर्क वैष्णव दर्शन तीर्थाद्युपाध्यलङ्कृतेन श्रीहरिदासशास्त्रिणा सम्पादितः ।

सद्ग्रन्थ प्रकाशक :
**श्रीहरिदास शास्त्री**
**श्रीगदाधरगौरहरि प्रेस**
श्रीहरिदास निवास, कालीदह, वृन्दावन,
जिला-मथुरा, पिन—२८११२१

❀ श्रीश्रीगौरगदाधरौ विजयेताम् ❀

# विज्ञप्तिः



करुणावरुणालय श्रीश्रीगौरहरि की अशेष अनुकम्पा से 'छन्दः कौस्तुभः' नामक अतीव उपादेय ग्रन्थ प्रकाशित हुआ। ग्रन्थकार—कान्यकुब्ज विप्रवंशावतंस श्रीराधादामोदर प्रभु हैं। ब्रह्मसूत्र के गोविन्दभाष्य प्रणेता श्रीमद् बलदेव विद्याभूषण के आप दीक्षागुरु थे। इसका विवरण छन्दः कौस्तुभः ग्रन्थ के भाष्य प्रणयन के प्रारम्भ में "अर्चित-नयनानन्दो राधादामोदरो गुरुर्जीयात्। विवृणोमि यस्य कृपया छन्दः कौस्तुभमहं मितवाक्" पद्य में है। नव-प्रभापूर्ण यह छन्दः कौस्तुभ ग्रन्थ है। इसमें उल्लिखित छन्दः संख्या २६४ है। उदाहरणमूलक छन्दो लक्षण ग्रन्थ में होने के कारण लक्षणों का उदाहरण प्रस्तुत करने की आवश्यकता नहीं हुई। गङ्गादास कविकृत छन्दो मञ्जरी ग्रन्थ के आदर्श से छन्दः कौस्तुभ रचित होने पर भी सप्तम प्रभा में—

"प्रतिचरणं रसगुणितजलधि(२४)कलिका-परिखचितम्।
रोला-नामक-वृत्तमिदं फणिनायक-रचितम्॥" इत्यादि

पञ्चदश छन्दों का एवं अष्टम प्रभा में—

"प्रस्तारोद्दिष्टा नष्टानि तथा मेरुपताकिके।
मर्कटी चेति षट् प्राहुः प्रत्ययान् वर्णमात्रयोः॥"

वर्णप्रस्तारादि, नवम प्रभा में—

"अथ द्वि-त्रि-चतुःपञ्च-षट्कलादीनां विनिर्ममे।
प्रस्तारं खलु मात्राणां पादानां नागनायकः।
तद्भेदा द्वि-त्रि-पञ्चाष्टत्रयोदशमुखाः क्रमात्॥"

मात्रा प्रस्तारादि का अतिरिक्त सन्निवेश विद्यमान है।

प्रथम प्रभा में ३१ श्लोक है—(१) आशीर्वाद एवं वस्तु निर्देशात्मक मङ्गलाचरण, (२) स्वेष्ट देवता का नमस्कार, (३) पिङ्गल-नागराज का नमस्कार, (४) छन्दों की आवश्यकता, (५) छन्दों का मात्रावृत्त भेद से विभाग, छन्दः समूह का संग्रह विवरण, (६) क्रमप्राप्त वर्णछन्दः के म य र स त ज भ न अष्ट गण, (७) गणदेवता, (८) सर्वगुरुर्मः कथितो भ-ज-सा गुर्वादिमध्यान्ताः, (९) गुर्गश्च गुरुरेकः स्याल्लस्त्वेको लघुरुच्यते, (१०) मा प्रभृति गणों का भेद, वर्णों के शत्रुमित्र भेद, (११) फल, (१२-१३-१४) वर्णों का फल, (१५) दग्ध वर्णों का विवरण, (१६) दग्ध वर्णों का प्रयोग निषेध, (१७) देवता वाचक वर्णों का प्रयोग विधान, (१८) मात्रा का विवरण, (१९) गुरुलघु का विवरण, (२०) पाद का विवरण, (२१) यति लक्षण, (२२) अयुग्म-युग्म का विवरण, (२३) वृत्त त्रिविधा, (२४) विषम का लक्षण, (२५) संज्ञा प्रभृति का विवरण, (२६) १ वर्ण से २६ अक्षर प्रभृति छन्दः, (२७) उक्थादि की वर्णना, (२८) त्रिष्टुप का वर्णन, (२९) घृति, अतिधृति, (३०) दण्ड प्रभृति का वर्णन, (३१) मात्रा-वृत्त का विवरण।

इति छन्दः कौस्तुभे संज्ञा-निबन्ध प्रथमा प्रभा॥१

द्वितीय प्रभा में समवृत्त के भेद का वर्णन है। अर्थात्—(१) उक्था, (१) अत्युक्था (३) मध्या, (४) प्रतिष्ठा, (५) सुप्रतिष्ठा, (६) गायत्री, (७) उष्णिग्, (८) अनुष्टुभ, (९)

बृहती, (१०) पंक्ति, (११) त्रिष्टुप्, (१२) जगती, (१३) अति जगती, (१४) शक्करी, (१५) अतिशक्करी, (१६) अष्टि, (१७) अत्यष्टि, (१८) धृति, (१९) अतिधृति, (२०) कृति, (२१) प्रकृति, (२२) आकृति, (२३) विकृति, (२४) संस्कृति, (२५) अतिकृति, (२६) उत्कृति एवं दण्डक का वर्णन है।

इति छन्दः कौस्तुभे वर्णच्छन्दसि समवृत्ताख्य द्वितीया प्रभा ॥२

तृतीय प्रभा में अर्द्धसमवृत्त की भेद का वर्णन है। अर्थात् (१) उपचित्र, (२) वेगवती, (३) हरिणप्लुता, (४) माल भारिणी, (५) द्रुतमध्या, (६) भद्रविराट्, (७) केतुमती, (८) आख्यानकी, (९) विपरीत पूर्वा, (१०) अपरवक्त्र, (११) पुष्पिताग्रा, (१२) सुन्दरी, (१३) परामती का वर्णन है।

इति छन्दः कौस्तुभे वर्णछन्दसि अर्द्धसमवृत्ताख्या तृतीया प्रभा ॥३

चतुर्थी प्रभा में विषमवृत्त का वर्णन है। अर्थात् उद्गता, सौरभक, ललित, इत्युद्गता भेदाः। पदचतुरुर्द्ध, आपीड़, कलिका, लवली, अमृतधारा, उपस्थित, प्रचुषित, वर्द्धमान, शुद्धविराडार्षभ, गाथा का वर्णन है।

इति छन्दः कौस्तुभे वर्णछन्दसि विषमवृत्ताख्या चतुर्थी प्रभा ॥४

पञ्चमी प्रभा में वक्त्रप्रकरण का वर्णन है। अर्थात् पथ्या वक्त्र, विपरीत पथ्या वक्त्र, चपला वक्त्र, युग्मविपुला, विपुला-भ विपुला, न विपुला, त विपुला का वर्णन है।

इति छन्दः कौस्तुभे वक्त्रनिरूपणं पञ्चमी प्रभा ॥५

षष्ठी प्रभा में मात्रावृत्त आर्य्या का वर्णन है। अर्थात् आर्य्या, पथ्या, विपुला, चपला, मुखचपला, जघनचपला, गीति, उपगीति, उद्गीति, आर्य्यागीति का वर्णन है। एवं वैतालीय,

औपछन्दसिक, आपातलिका, दक्षिणान्तिका, उदीच्य वृत्ति, प्राच्य वृत्ति, प्रवृत्तक, अपारान्तिका, चारुहासिनी का वर्णन है।

इति छन्दः कौस्तुभे मात्राछन्दस्यार्या-वैतालीयनिर्णयः षष्ठी प्रभा ॥६

सप्तमी प्रभा में पज्झटिका का वर्णन है। अर्थात् पज्झटिका, मात्रासमक, विश्लोक, वानवासिका, चित्रा, उपचित्रा, पादाकुलक एवं रोलादि छन्दों का वर्णन है। अर्थात् रोला, द्विपथा (दोहा) सोरट्ठा, चतुष्पद, षट्पद, कुण्डलिका, शिखा, अनङ्गक्रीड़ा, खञ्जा, रुचिरा, प्रवङ्गम, मरिल, चुलियाला, त्रिभङ्गी, दुर्म्मिला का वर्णन है।

इति मात्राछन्दसि पज्झटिकादिसंकीर्णा वृत्तनिरूपणं सप्तमी प्रभा ॥७

अष्टमी प्रभा में वर्णप्रस्तार, रचनाविधि, वर्णोद्दिष्ट, वर्ण नष्ट, वर्णपताका, वर्णमर्कटी का वर्णन है।

इति छन्दः कौस्तुभे वर्णप्रस्तारोऽष्टमी प्रभा ॥८

नवमी प्रभा में मात्राप्रस्तार, मात्रोद्दिष्ट, मात्रानष्ट, मात्रामेरु, मात्रापताका, मात्रामर्कटी का वर्णन एवं ग्रन्थकर्त्ता का परिचय तथा—"वेदर्त्तुपक्षसंख्याताश्छन्दसां व्यक्तयोऽत्र याः।
लिखिताः सन्ति सन्तः कलयन्तु कृपाकुलाः॥
के द्वारा २६४ संख्यक छन्दों का सङ्कलन उल्लिखित हुआ है।

इति छन्दः कौस्तुभे मात्राप्रस्तारो नाम नवमी प्रभा ॥९

काव्य रसास्वादन हेतु छन्दों का परिज्ञान अपरिहार्य्य है। अतः वेदाङ्ग में छन्द शास्त्र का सन्निवेश हुआ है।

'शिक्षा कल्पो व्याकरणं निरुक्तं छन्द इत्यपि।
ज्योतिषामयनं चक्षु निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् स्वाङ्गमधीत्यैव ब्रह्मलोके महीयते॥'

छन्दो विषय का अज्ञान भी पाप है,—

'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।
योऽध्यापयेद् जपेद्वापि पापीयान् जायते तु सः॥'

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रु स्वरतोऽपराधात्॥'

अतएव छन्दः शास्त्र की प्रशस्ति में उक्त है—'छादयति एनसः पापात् कर्मणः' 'छन्दांसि छादनात्' छन्दयति ह्लादयतीति छन्दः।

पाणिनि के मतमें—'चन्देरादेश्च छः' के द्वारा छन्दः शब्द निष्पन्न होता है। अमरकोषकार के मतमें 'छन्दः पद्ये च वेदे च' वेदमें छन्दः का प्रयोग होता है। किन्तु लौकिक साहित्य में बद्धपद पद्य ही छन्दः शब्द से सुप्रसिद्ध है। प्रस्तुत छन्दः कौस्तुभ नामक छन्दो ग्रन्थमें लौकिक छन्दों का निरूपण हुआ है।

छन्दः सूत्र एवं छन्दो मञ्जरी प्रभृति छन्दो ग्रन्थों का सादृश्य इसमें विद्यमान होने पर भी अतीव सारल्य के कारण तथा पूर्णाङ्गता के कारण यह ग्रन्थ अति उपादेय है। अर्थात् इसके अध्ययन से उक्त छन्दो ग्रन्थ समूह का भी परिज्ञान स्वल्प समय में सुखपूर्वक होगा। विशेषतः परिशिष्ट ग्रन्थ में अनिरूपित छन्दः समूह का सन्निवेश होने के कारण पूर्णाङ्ग अध्ययन इससे ही सम्पन्न होगा।

इसमें श्रीबलदेव विद्याभूषण कृत अति उपादेय संक्षिप्त टीका है। सरल रूपसे लक्षणों का परिज्ञान के निमित्त आवश्यक सरल व्याख्या भी सन्निविष्ट है।

४५७ गौराब्द में श्रीहरिदासदास प्रकाशित ग्रन्थ के आदर्शसे एवं हस्तलिखित ग्रन्थों की सहायता से प्रस्तुत ग्रन्थ प्रकाशित हुआ।

**हरिदास शास्त्री**

# विषय सूची

※ श्रीश्रीगौरगदाधरौ विजयेताम् ※

(अकारादि वर्णक्रमेण)

# छन्दसां सूचीपत्रम्

---



* श्रीश्रीगौरगदाधरौ विजयेताम् *

# छन्दः कौस्तुभः

## प्रथमा प्रभा

**छन्दोभिर्विततांङ्गैः कवयो यस्यानुकीर्त्तयन्ति गुणान् ।**
**स जयति गोकुल-वनिताजितान्तरः श्यामसुन्दरो भगवान् ॥१**

**श्रीमद् बलदेवविद्याभूषण-कृता टीका ।**

अर्च्चितनयनानन्दो राधादामोदरो गुरुर्जीयात् ।
विवृणोमि यस्य कृपया छन्दः कौस्तुभमहं मितवाक् ॥

अथ श्रीनयनानन्द-पदारविन्दसेवासादित-निखिलशास्त्रार्थश्छन्दोविद्वृन्दवन्द्यः श्रीराधादामोदराख्यः कान्यकुब्जविप्रवंशावतंसो महत्तमः कविश्छन्दः कौस्तुभनामश्छन्दः शास्त्रं प्रणयन् सर्व्वंश्छन्दःप्रगेयचरितं श्रीकृष्णं प्रणमति—छन्दोभिरिति । स श्यामसुन्दरो जयति, स्वोत्कर्षमाविर्भावयतु । जये हेतुर्भगवानिति । "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चापि षण्णां भग इतीङ्गना ॥" इत्युक्त-षड़ङ्ग-विशिष्टः । ईदृशोऽपि भक्तिवश्य इत्याह—गोकुलेति । अन्तरञ्जितम् । कोसावित्याह—छन्दोभिरिति । कवयो यस्य गुणान् विततांङ्गैश्छन्दोभिः कीर्त्तयन्तीति गोकुलवनिताभिः सह विहरतस्तत् प्रेमवश्यस्य तस्य लीलां गातुं छन्दांसि फणीन्द्रेण प्रणीतानि । एवं वक्ष्यति लीलां विष्णोरिति । छन्द्यन्ते ग्रथ्यन्ते पद्यान्येभिरिति छन्दांसि तैरित्यर्थः । विततांङ्गैरिति प्रस्तृताया जातेरेकस्याभेद बाहुल्यात् । जयतिरत्र सर्व्वोत्कर्षविधात्री सर्व्वोत्कर्षाश्रियः खलु स्वेतरसर्व्वनमस्य इत्याक्षिप्यते । सर्व्वान्तःपातित्वाश्छास्त्रकर्त्तुश्च स नमस्य इति । सर्व्वनमस्याद्भगवत-

स्तस्मादस्माकं सर्व्वेषां मङ्गलं भूयादिति च व्यज्यते। श्यामसुन्दरो भगवानिति वस्तुस्वरूप-कीर्त्तनम्। इत्थञ्चाशीर्नमस्क्रियावस्तुनिर्द्देशो वापि तन्मुखमित्यभियुक्तोक्तं ग्रन्थारम्भे मङ्गलं दर्शितम्। न च मङ्गलमप्रमाणमफलञ्चेति वाच्यम्। शिष्टाचारानुमितायाः श्रुतेः प्रमाणत्वात् शास्त्रपूर्त्तेः फलत्वाच्च। ननु क्वचित् सत्यपि मङ्गलेऽसमाप्तिरसति च तस्मिन् समाप्तिर्दृष्टा, ततो व्यभिचार इति चेत्, मैवम्। योग्यमङ्गलाकरणाद्वहिस्तदकरणाच्चेत्यावश्यकन्तत् ॥१॥

**नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः।**

**निरवद्यो निर्वृतिमान् गजपतिरनुकम्पया यस्य ॥२**

विघ्नाधिकाशङ्कया पुनर्मङ्गलाचरणम्—नित्यमिति। अत्र मुरारिश्चैतन्यश्चेति द्वावर्थौ प्रतिपाद्येते। तत्रादौ ग्रन्थकर्त्तुः परमगुरुः श्रीरसिकानन्दापराख्यः। स कीदृश इत्याह—चैतन्यात्मेति। चैतन्यार्पितचित्त इत्यर्थः। गजपतिर्गोपालदासाभिधानः करिराजः, निरवद्यस्त्यक्तपशुभावः, निर्वृतिमान् सत्सेवाजन्यानन्दविशिष्टः। यस्यानुकम्पया बभूवेति शेषः। द्वितीयः श्रीमहाप्रभुः। चैतन्यनामा आत्मा विग्रहो यस्य स कीदृश इत्याह—मुरारिरिति संसृतिकुत्सानाशक इत्यर्थः। गजपतिः प्रतापरुद्रः उत्कलाधीशः, निरवद्यः परित्यक्तराजः सः, निर्वृतिमान् प्रेमसुखमग्नः। अत्र प्रथमोऽर्थो वाच्यः, द्वितीयस्तु व्यङ्ग्यः। भगवत् पक्षेऽपि पद्यमेतद् सुघटम् ॥२॥

**लीलां विष्णो र्गातुकामोऽतिचित्रां,**
**च्छन्दांस्याख्यद् योऽभिरूपाह्वयानि।**

**श्रीमान् विद्यावारिधिर्विश्वबन्द्यः,**
**पायात् सोऽस्मान् पिङ्गलो नागराजः ॥३**

अथ छन्दो देशिकात् पिङ्गलात् स्वरक्षामाशास्ते—लीलामिति। स श्रीमान् नागराजः पिङ्गलः शेषोऽस्मान् पायात् विघ्नाद् रक्षतु। स क इत्याह—योऽतिविचित्रां विष्णोर्लीलां गातुकामः सन्नभिरूपाह्वयानि छन्दांसि आख्यात् अवोचत्। भगवच्चरित्रगायकः खलु शेषः। 'गायन् गुणान् दशशतानन आदिदेव, शेषोऽधुनापि समवस्यति नास्य पार'मित्युक्तेः। छन्दो निवन्धमन्तरा तद् गानासिद्धेः। अतएव तल्लीलानुगाह्वयानि तानि कृतानि। स्फुटमन्यत् ॥३॥

**छन्दो लक्षणहीनं, सभासु काव्यं पठन्ति ये मनुजाः।**
**कुर्व्वन्तोऽपि स्वेन स्वशिरच्छेदं न ते विद्युः ॥४**

छन्दो वोधं विना विद्वान् सभायामुपहासपात्रम्भवत्यत स्तद्बोध आवश्यक इत्याह—छन्दो लक्षणेति। स्वेनात्मना स्वहस्तेनेति यावत्। न विद्युर्न जानीरन् ॥४॥

**वर्णमात्रादिभेदेन छन्दो द्विविधमीरितम्।**
**लक्ष्य-लक्षणरूपन्तत् प्रायः संगृह्यते मया ॥५**

वर्णमात्रेति—वर्णवृत्तं मात्रावृत्तञ्चेति द्विभेदश्छन्दः। तदत्र मया संगृह्यत इति प्राचीनानि सूत्राण्यत्र प्रायः सन्तीत्युक्तम्। कीदृशं छन्द इत्याह—लक्ष्यलक्षणरूपमिति। लक्ष्यं छन्दः। लक्षणं तत् गणादिनिरूपणन्तदुभयरूपमिति लक्षणमात्रकारिभ्यः प्राचीनेभ्योऽस्य ग्रन्थकर्त्तुरतिपाण्डित्यम्। प्राय इत्यापीड़ादिछन्दसांल्लक्ष्यनिरपेक्ष-लक्षणमात्रविधानात्। यद्यपि मात्रावृत्तानि कैश्चित् पूर्व्वमभिहितानि, तथापि वर्णवृत्तान्यत्र प्रागेवोच्यन्ते, ऋजुरीत्या चित्तप्रवेशहेतुत्वादिति बोध्यम् ॥५॥

**म-य-र-स-त-ज-भ-न संज्ञा श्छन्दस्यष्टौ गणा स्त्रिवर्णाः स्युः।**
**भूम्यम्बु-वह्निवायुव्योमार्कसुधांशु-नाकदास्ते ॥६**

**क्रमतः श्रीवृद्धिमृतिप्रयाणारिक्तत्व रुग् यशो मोदान्।**
**यच्छन्तिफलानि गणामाद्यास्तेऽष्टा प्रयोक्तृभ्यः ॥७**

**सर्वगुरुर्मः कथितो भ-ज-सा गुर्वादिमध्यान्ताः।**
**छन्दसि नः सर्वलघुर्यरता लघ्वादिमध्यान्ताः ॥८**

द्विभेदश्छन्दः प्रतिज्ञायाथ क्रमप्राप्तानि वर्णश्छन्दसि गणान् गणदेवता—गणफलानि चाह—मयरसेति द्वाभ्यम्। छन्दसि शास्त्रेऽष्टौ गणाः भवन्ति, ते च त्रिवर्णा वर्णत्रयरूपाः स्युः। ते किं नामानो भवन्तीत्याह—मयेति मादयः संज्ञः। गुरुत्रयादिरूपा स्त्वष्टौ त्रिकाः संज्ञिनः। ते चाष्टौ क्रमाद् भूम्यादि-देवताकाः, श्रचादीनि अष्ट फलानि प्रयोक्तृभ्यः प्रयच्छन्ति। प्रयोक्तारः काव्यस्य कर्त्तारः कवयः कारयितारश्च नृपा इत्यवधेयम्। यथासंख्यमलङ्कारः। यदुक्तम्—यथासंख्यं क्रमेण क्रमिकाणां समन्वय इति। गणदेवताफलानां त्वेष ऋजु बोधः। यथा—

मो भूः श्रियं यच्छति योऽम्बुर्वृद्धिं,
रोऽग्निर्मृतिं सो मरुत् प्रयाणम्।
तो व्योमरिक्तिं ज-रविः प्ररोगं,
भो दुर्यशः सौख्यभरं न-नाक इति ॥६-७॥

गणानां संज्ञां दर्शयित्वाथ संज्ञिनो दर्शयति—सर्व्वगुरुर्म इति। त्रिवर्ग इत्युक्तेः सर्व्वे त्रयोपि गुरवो यस्य स म-गणः। भ-ज-स इति गुर्व्वादि भ-गणः, गुरुमध्यो ज-गणः, गुर्व्वन्त स-गणः, य-र-ता इति लघ्वादि य-गणः, लघुमध्यो र-गणः, लघ्वन्तस्तगणः, इत्यर्थः ॥८॥

**गुर्गश्च गुररेकः स्याल्लस्त्वेको लघुरुच्यते ।**
**रेखाभ्यां ऋजु वक्राभ्यां ज्ञेयो लघुगुरुः क्रमात् ॥९**

गुरिति—एकस्मिन् लघौ लकारः सङ्केतितो गुकारो गकारश्चैकस्मिन् गुरावित्यर्थः। ननु लघुगुर्व्वोः कथं परिचयः स्यादित्यत आह—रेखाभ्यामिति। ऋजुरेखया लघुर्ज्ञेयः। वक्ररेखया तु गुरु ज्ञेयः—इत्यर्थः ॥९॥

**म ऽऽऽ, य ।ऽऽ, र ऽ।ऽ, स ।।ऽ, ज ।ऽ।, भ ऽ।।,**
**न ।।।, ग ऽ, ।**

**मनौ सखायौ कथितौ भयौ भृत्यावुदीरितौ ।**
**उदासीनौ तजौ प्रोक्तौ सरौ शत्रू मताविह ॥१०**

अथ मादि-गणानां मित्रादिभावमाह—मनाविति। स्फुटम् ॥१०

**सिद्धिर्भवेत् सखिभ्यां सखिभृत्याभ्यां जयः स्थिरत्वञ्च ।**
**स्याद् भृत्यमित्रभृत्यैः शुभं स्वपीड़ा तु मित्र-शत्रुभ्याम् ॥११**

मित्रादिरूपाणां मादीनां श्लोकादौ विन्यस्तानां फलान्याह—सिद्धिमिति। चतुर्भिः सखिभ्यां मनाभ्यां सखिभृत्याभ्यां मभाभ्यां नायाभ्यां च, भृत्यमित्रभृत्यैर्भमयैः यनमै र्वा ॥११॥

**अफलमुदासीनाभ्यां शत्रुसखिभ्यां रमाभ्यां च तद्भवति ।**
**शत्रुभ्यां तु विरोधो नायकनाशश्च संप्रोक्तः ॥१२**

उदासीनाभ्यां तजाभ्यां शत्रुसखिभ्यां रमाभ्यां वा। शत्रुभ्यां सराभ्याम् ॥१२॥

**शत्रूदासीनाभ्यां हानिरुदासीनशत्रुभ्याम् ।**
**अस्वायत्ति-र्गदिता श्रीनाश-शत्रुभृत्याभ्याम् ॥१३**

शत्रूदासीनाभ्यां सताभ्यां रजाभ्यां वा। हानिर्द्रविणनाशः। उदासीनभृत्याभ्यां तभाभ्यां जयाभ्यां वा। आस्वायत्तिः पारतन्त्र्यम्। श्रीनाशः शोभाक्षयः, शत्रुभृत्याभ्यां सभाभ्यां रयाभ्यश्च ॥१३॥

**क्षयवैरिभय-प्राप्तिर्भवत्युदासीनशत्रुभ्याम्।**
**मित्रोदासीनाभ्यामश्रीरिति गणफलान् प्राहुः ॥१५**

क्षयश्च कुटुम्बनाशः, वैरिभयश्च तयोः प्राप्तिर्भवति। उदासीन-भृत्याभ्यां तभाभ्यां जयाभ्याञ्च। मित्रोदासीनाभ्यां भताभ्यां नजाभ्याञ्च। अश्रीर्दारिद्रयम् ॥१४॥

**ह-ज-ध्रघन खभान् प्रादुर्दग्धवर्णान् विपश्चितः।**
**ह-ज-धा हितजीवनधनहरानृपक्रोधकृद् रेफः।**
**तनुपीड़ारुग्व्रणदा घनखा भ इहातिदूरातिदायी ॥१५**

अथ दुष्टाक्षराणि तत् फलानि चाह—हजध्रेति सार्द्धेन। हजधा इत्यादौ क्रमो बोध्यः। भ-कारो देशाद् विवासयतीत्यर्थः ॥१५

**गणादुष्टफलाराद्या दग्धवर्णाश्च हादयः।**
**शुभश्लोकमुखेनैते प्रयोक्तव्याशुभार्थिभिः ॥१६**

दुष्टवर्णानाञ्च ज्ञापने फलमाह—गणा इति ॥१६॥

अत्रापवादमाह—(भामह वचनम्)

**देवता-वाचकाः शब्दा ये च भद्रादि-वाचकाः।**
**ते सर्व्वे न च निन्द्याः स्युर्लिपितो गणतोऽपि च ॥१७**

इह भामह—वचनेन बाधमाह—देवतेति। श्रीकृष्ण-शङ्करादयो देवता। भद्रं मङ्गलं लिपिर्वर्णः ॥१७॥

**ज्ञेयाः सर्व्वादिमध्यान्तगुरवोऽत्र चतुष्कलाः ।**
**गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः ॥१८**

एवं वर्णवृत्तगणादीनुक्त्वा मात्रावृत्तगणामाह—ज्ञेया इति। आर्य्यादिषु मात्रावृत्तेषु संस्थिताः पञ्चगणा ज्ञेया इत्यन्वयः। तेषां स्वरूपमाह—चतुष्कला इति। पञ्चापि ते चतुर्म्मात्रात्मका इत्यर्थः। तेषां मिथो व्यावर्त्तकान् धर्म्मान् दर्शयन् विशिनष्टि—सर्व्वादिमध्यान्त-गुरवश्चतुर्लघूपेतश्चेति। सर्व्वादौ मध्यन्ते च गुरुर्येषां ते तथा। चतुर्लघुना गणेन युक्ताश्चेत्यर्थः। सर्व्वगुरुरादिगुरुर्मध्यगुरुरन्तगुरु-श्चतुर्लघुश्चेति। मिथो भिन्नाः पञ्चगणाः ॥१८॥

**अनुस्वारी विसर्गी च दीर्घो युक्तपरस्तथा ।**
**वर्णो गुरुर्मतो ह्ले प्रे पादान्ते चापि वा लघुः ॥१९**

अथ गुरुलघु लक्षणमाह—अनुस्वारीति। अनुस्वारि प्रमुखो वर्णो गुरुर्मतः। हरिं पुनः साक्षात् करिष्यसीति चतुर्णामुदाहरणम्। ह्ले प्रे च पूर्व्वस्य ह्रस्वस्य वा लघुत्वम्। तच्च वैवक्षिकं बोध्यम्। पादान्ते गुरुरपि लघुर्लघुश्च गुरुर्विवक्षया भवेत्। वैवक्षिकयो-र्गुरुलघ्वोः प्रसादे तु वक्रर्जु रेखे लेख्ये। किञ्च—तीव्रप्रयत्नोच्चारणे गुरोर्लघुत्वमाह—कण्ठाभरणः। "यदा तीव्रप्रयत्नेन संयोगादे-रगौरवम्। न छन्दो भङ्गमप्याहुस्तदा दोषाय सूरयः॥" इति ॥१९

**चतुर्थः पञ्चभागस्तु पादः सद्भिर्निगद्यते ॥२०**

**यति जिह्वेष्टविश्रामस्थानमाहुर्मनीषिणः ।**
**तां विच्छेद-विरामाद्यैः पदैरत्र प्रयुज्यते ॥२१**

पाद-लक्षणमाह—चतुर्थ इति। श्लोक-तुर्य्यांशः पाद इत्यर्थः। अत्र 'भागः' समचतुर्थांशो न ग्राह्यः। यावान् यत्रोच्यते तेन

समार्द्धसम-विषमाणां पादाः स्युः ॥२०॥

यतिं लक्षयति—यतिमिति। आदि स्वादिपरिग्रहः। अत्र गोपालदासो विशेषणमाह—यथा,

"क्वचिच्छन्दान्ते यतिरभिहिता पूर्व्वकृतिभिः,
पदान्ते से शोभां व्रजति पदमध्ये त्यजति च।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां,
यथा कृष्णः प्रष्टात्वतुलमहिमा मां करुणया॥" इति।

श्वेतमाण्डव्यादयस्तु यतिं न मन्यन्ते, यदुक्तम्—
'श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम्।' इति ॥२१॥

**अयुग्मं विषमं स्थानमयुगोजश्च तद्भवेत्।**
**अनोजो युक् च युग्मं च समन्तत् परिकीर्त्यते ॥२२**

अयुग्मेति—प्रथम-तृतीयादिरूपस्य विषयस्थानस्य अयुग्मं अयुक् ओजश्चेति संज्ञात्रयम्। द्वितीय-चतुर्थादिरूपस्य समस्थानस्य युग्मं युक् अनोजश्चेति संज्ञात्रयम् बोध्यम्। एतच्चार्द्धसमादिषु वृत्तेषु व्यक्ती भविष्यति ॥२२॥

**सममर्द्धसमं वृत्तं विषमञ्चेति तत् त्रिधा।**
**समं समचतुष्पादं वृत्तमर्द्धसमं तु तत् ॥२३**
**आद्यस्तृतीयवद् यस्य द्वितीयस्तुर्य्यवद् भवेत्।**
**भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥२४**

सममिति वृत्तं त्रिविधम्। सममर्द्धसमं विषमञ्चेति। तेषु समचतुष्पादं वृत्तं सममुच्यते। समा एकलक्षणाश्चत्वारः पादा यस्य तत्। अर्द्धसमन्तु तत्, यस्य वृत्तस्य प्रथमः पादस्तृतीयतुल्यः द्वितीयः, चतुर्थस्तुल्य भवति। विषमन्तु वृत्तं भिन्नचिह्नचतुष्पादम्। भिन्नचिह्नाश्चत्वरः पादा यस्य तत्। वर्त्तते कविरनेन पद्यनिर्म्मिताविति वृत्तम् ॥२३-२४॥

**संज्ञाशरहयाद्यः तु लोकतोऽध्यवसीयते ॥२५**

संज्ञेति। शराद्या संज्ञा लोकतो ज्योतिः शास्त्रादेव बोध्या। खं शून्यं, विधुरेकः स्यान्नेत्रपक्षौ द्विके स्मृतौ। त्रिके शिखि-गुणा वेदाब्धियुगानि चतुष्टये॥ शरा भूतानि करणानि च प्रोक्तानि पञ्चके। ऋतवो गुह वक्त्राणि रसाश्च षडुदीरिताः॥ स्वरश्च मुनिलोकाश्च सप्तेह परिकीर्त्तिताः॥ भोम्यङ्गवसवोऽष्ट स्युर्नवरन्ध्र ग्रहाः स्मृताः॥ दिशो दशैकादश स्युः शिवा द्वादशसूर्य्यकाः। चतुर्द्दशात्र भुवनान्येवमाहुर्मनीषिण इति ॥२५॥

**आरभ्यैकाक्षरात् पादादेकैकाक्षर-वर्द्धितैः।**
**पादैरुक्थादि-संज्ञं स्याचछन्दः षड् विंशति गतम् ॥२६**

आरभ्येति—वर्णछन्दांस्येकाक्षर-पादादीनि षड् विंशत्यक्षर-पादान्तानि भवति। तानि च क्रमादुक्थादि-जातिमन्ति बोध्यानि ॥२६॥

**उक्थात्युक्था तथा मध्या प्रतिष्ठा सुप्रतिष्ठिका।**
**गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च ॥२७**

ता जातीराह—उक्थेति त्रिभिः ॥२७॥

**त्रिष्टुप् च जगती चापि तथातिजगती मता।**
**शर्क्करी सातिपूर्वा स्यादष्टिरत्यष्टिरित्यपि ॥२८**

**धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः।**
**विकृतिः संकृतिश्चापि तथातिकृतिरुत्कृतिः ॥२९**

सातिपूर्व्वेति—अतिशर्करीत्यर्थः ॥२८-२९॥

**दण्डकास्तूद्‌र्ध्वमेतेभ्यश्चण्डवृष्ट्यादयो मताः ।**
**शेषं गाथा स्त्रिभिः षड्‌भिश्चरणैरुपलक्षिताः ॥३०**

दण्डकास्त्विति—एतेभ्यः षड्‌विंशत्यक्षरपादपर्य्यन्तेभ्य उद्‌र्ध्वमुपरि सप्तविंशत्यक्षर-पादप्रभृतयो दण्डका भवन्ति ॥३०॥

**मात्रावृत्तानि चार्य्यादि-नामान्याहुर्विपश्चितः ॥३१**

एवं वर्ण-वृत्ता संज्ञाः प्रोच्य मात्रावृत्त-संज्ञा दर्शयति—मात्रावृत्तानीति ॥३१॥

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये**
**प्रथमा प्रभा ॥१॥**

…०:*:०…

## द्वितीया प्रभा

### ( १ )

**तत्रैकाक्षरोक्‌था—यथा, ग् श्रीः ॥१**

(चतुः पाठात् पद्यपूर्त्तिः)

सममर्द्धसमं वृत्तमित्युक्तक्रमप्राप्त-समवृत्तभेदांस्तावदाह—तत्रैकेति । श्रीरिति—यत्र प्रतिपादमेको गुरुस्तत् श्रीश्छन्दः । उदाहरणं—श्रीस्ते सास्ताम् ॥१॥

### ( २ )

**द्व्यक्षरात्युक्‌था—यथा, गौ स्त्री ॥२**

द्व्यक्षरेति—गौ स्त्री-यत्र प्रतिपादं गुरुद्वयं स्यात्, तत् स्त्री छन्दः। गोपस्त्रीभिः कृष्णो रेमे ॥२॥

( ३ )

**त्र्यक्षरा मध्यमा—यथा, मो नारी ॥३**

त्र्यक्षेति—मो नारी। यत्र प्रतिपादं म-गणस्तन्नारी छन्दः। गोपीनां नारीभिः। श्लिष्टोऽव्ययात् कृष्णो वः ॥३॥

**रो मृगी ॥४**

रो-मृगी—यत्र प्रतिपादं ग-गणस्तन्मृगी छन्दः। सा मृगी-लोचना राधिका व्याहरत् ॥४॥

( ४ )

**चतुरक्षरा प्रतिष्ठा—यथ, ग्मौ चेत् कन्या ॥५**

चतुरक्षरेति—ग्मौ चेत् कन्या। गुरुर्मगणश्चेत् कन्या छन्दः, कृष्णो यस्याश्चेतश्चक्रे। सेयं भानोः कन्या धन्या ॥५॥

**नगि सती ॥६**

नगि सती—यत्र प्रतिपादं न-गणगुरु स्यातां, तत् सती छन्दः। मधुरिपो तव वचः। पिबति सा किल सती। एवं अग्रेऽपि उदाहरणानि कल्प्यानि ॥६॥

( ५ )

**पञ्चाक्षरा सुप्रतिष्ठा—यथा, भ्गौ गिति पङ्क्तिः ॥७**

पञ्चाक्षरेति—भ्गौ गिति। भगणो गुरुद्वयञ्चेत् पङ्क्तिः छन्दः। अर्थात् यस्य छन्दसः प्रतिपादं क्रमशः भ् च गश्च भ्गौ भगण-गगणौ, ग् इति अपरोऽप्येको ग-गणश्च भवेदित्यर्थः। यत्र

प्रतिपादं द्वितीय-तृतीयौ लघू, प्रथम-चतुर्थ-पञ्चमाश्च वर्णा गुरवः स्युरिति भावः, तद्वृत्तं पङ्क्तिः पङ्क्तिरिति नाम्ना व्यपदिश्यते इत्यर्थः। उदाहरणम्—कृष्ण सनाथा तर्णकपङ्क्तिः।

यामुन कच्छे चारु चचार॥ कृष्णेन सनाथा सहिता तर्णकपङ्क्तिः वत्सश्रेणी, यमुनाया अयं यामुनः, य चासौ कच्छश्चेति तस्मिन् यामुनकच्छे यमुनाया जलप्रायतटप्रदेशे चारु मनोहरं यथा स्यात्तथा चचार विचरणं चचार बभ्रामेत्यर्थः ॥७

## सलगैः 'प्रिया' ॥८

सलगैरिति—यत्र स-गण लघुगुरवः स्युस्तत् प्रिया छन्दः। अर्थात् यस्य प्रतिपादं सश्च लश्च गश्च सलगाः, तैः उपलक्षितं भवतीति शेषः। यत्र तृतीय-पञ्चमौ वर्णौ गुरु शिष्टाश्च लघवो भवेयुरिति भावः। तत् प्रिया प्रिया नाम वृत्तं भवेदित्यर्थः। उदाहरणं यथा—व्रजसुभ्रुवः व्रजाङ्गनाः, मुरवैरिणः कृष्णस्य प्रिया वल्लभा अभवन्, नृत्यादिविद्यानिपुणास्वेव स आधिक्येन तुष्यति स्मेत्यर्थः ॥८॥

## ( ६ )

## षड़क्षरा गायत्री—यथा, त्यौ चेत् तनुमध्या ॥९

षड़क्षरेति—त्यौ चेदिति। तगण-यगणौ यत्र प्रतिपादे स्यातां, तत्तनुमध्या छन्दः। अर्थात् चेद् यदि छन्दसः प्रतिचरणं त्यौ तगण-यगणौ स्याताम्, तृतीया-चतुर्थौ विना सर्वे वर्णा गुरवः स्युरिति भावः, तदा तनुमध्येतिनाम वृत्तं भवति। उदाहरणम्—मूर्त्ति-मुरशत्रोरत्यद्भुतरूपा। आस्तां मम चित्ते नित्यं तनुमध्या। अत्यद्भुतं रूपं यस्याः सा अत्यद्भुतरूपा, तथा तनु कृशं मध्यं मध्यभागो यस्याः सा तथोक्ता, क्षीणमध्येत्यर्थः। मुरशत्रोः

श्रीकृष्णस्य मूर्त्तिः स्वरूपं नित्यं निरन्तरं मम चित्ते मदीय मानसे आस्तां तिष्ठतु। श्रीकृष्णः सदा मे भावनाविषयो भवत्वित्यर्थः ॥९॥

## शशिवदना न्यौ ॥१०

शशीति—यत्र नगण-यगणौ स्यातां तच्छशिवदना छन्दः। अर्थात् यस्य प्रतिपादे न् च यश्च न्यौ नगण-यगणौ स्याताम्, अन्ये द्वयमृते सर्वे वर्णा लघवः स्युरिति भावः। तत् शशिवदना तन्नामकं वृत्तं भवेत्। उदाहरणं यथा—शशिवदनानां व्रजतरुणीनाम्।
अधरसुधोर्म्मिं मधुरिपुरैच्छत् ॥

मधुरिपुः कृष्णः, शशीव चन्द्र इव वदनं मुखं यासां तासां चन्द्रतुल्य-मनोहरवदनानां व्रजतरुणीनां व्रजाङ्गनानां अधराणि एव सुधा, तस्या ऊर्मिम् अधरामृतपरम्परामित्यर्थः, ऐच्छत्—आचकाङ्क्ष ॥१०॥

## द्विया 'सोमराजी' ॥११

द्वियेति—यत्र यगणद्वयं तत् सोमराजी छन्दः। अर्थात् द्वौ यौ य-गणौ यत्र सा द्विया वृत्तिरिति शेषः, सोमराजी एतन्नामिका भवति। यस्य पादे यगणद्वयं वर्त्तते तद्वृत्तं सोमराजीति नाम्ना व्यपदिश्यत इत्यर्थः। उदाहरणं यथा—

हरे सोमराजीसमा ते यशः श्रीः। जगन्मण्डलस्य भिनत्यन्धकारम् ॥

हे हरे—कृष्ण! ते तव सोमानां चन्द्राणां राजी श्रेणिः, तत् समा चन्द्रावलीतुल्या इत्याशयः, यशः श्रीः कीर्त्तिसम्पत्, जगन्मण्डलस्य पृथिवीमण्डलस्य, समस्तस्य जगत इत्यर्थः। अन्धकारं पापरूपं ध्वान्तं छिनत्ति विनाशयति। चान्द्रो सम्पद् यथा जगतो ध्वान्तं विनाशयति तथा तद्वदतिधवला त्वदीय कीर्त्तिसम्पद् भक्तानां वृजिनान्धकारं दूरीकरोतीति भावः ॥११॥

## रसौ चेद् वसुमती ॥१२

त्सौ चेदिति—यत्र तगण-सगणौ स्यातां तद् 'वसुमती' छन्दः। छन्दो मञ्जर्य्यामत्र विशेषः '**विद्युल्लेखा' मो मः**। गोपस्त्रीणां मुख्या विद्युल्लेखा रूपा। कालिन्दी तीरे सा रेमे श्रीकृष्णेन। यस्य वृत्तस्य प्रतिपादं मो मः द्वौ मगणौ स्याताम्, सर्व्वे वर्णा गुरवः स्युरिति भावः। तद् 'विद्युल्लेखा' नाम वृत्तं भवति। उदाहरणं —गोपेति। गोपस्त्रीणां गोपाङ्गनानां मुख्या तासु श्रेष्ठेत्यर्थः। तथा विद्युतो रेखा विद्युल्लेखा, रलयोरभेदाद् रस्य लत्वम्। तस्या इव रूपं यस्याः, सा तथोक्ता, सा प्रसिद्धा राधिका, कालिन्दी तीरे यमुनाकूले श्रीकृष्णेन सहेति शेषः, रेमे क्रीड़ितवती। अत्र चतुर्थ-पादान्तिमवर्णस्य ह्रस्वत्वेऽपि पादान्तयत्वाद्दीर्घत्वमित्यवधेयम् ॥१२

## ( ७ )

**सप्ताक्षरोष्णिग्—यथा, ननगि 'मधुमती' ॥१३**

सप्ताक्षरेति—ननगीति। नगणौ गुरुश्चेन्मधुमती छन्दः। अर्थात् नश्च नश्च ग् च तेषां समाहारः ननग्, तस्मिन् ननगि 'मधुमती' नाम वृत्तं भवति। यस्य प्रतिचरणमन्त्यवर्णं विहाय सर्व्वे गुरवः स्युः, तद्वृत्तं मधुमतीसंज्ञं भवतीति भावः। उदाहरणम् —'रविदुहितृतटे नवकुसुमततिः। व्यधित मधुमतीमधुमथनमुदम्॥' रवेः सूर्य्यस्य दुहिता कन्या यमुनेत्यर्थः। 'कालीन्दी सूर्य्यतनया यमुना' इत्यमरः। तस्यास्तटे कूले मधुमती मधुप्रचुरा सद्यप्रस्फुटित-त्वादिति भावः। नवकुसुमानां नूतनपुष्पाणां ततिः श्रेणी, मधुं दैत्यं मकरन्दञ्च मथ्नाति इति मधुमथनः, तस्य मधुमथनस्य कृष्णस्य भ्रमरस्य च मुदम्—आनन्दं व्यधित जनयामासेत्यर्थः॥१३॥

**कुमारललिता जसौ ग् ॥१४**

कुमारेति। जगण-सगण-गुरवश्चेत् कुमारललिता छन्दः।

अर्थात् यस्य पादे ज् च स् च गश्च ज्स्गाः, जगण-सगणौ गुरुश्चैकः स्युरित्यर्थः। द्वितीय-षष्ठ-सप्तमा गुरवोऽन्ये च वर्णा लघवः स्युरिति भाव। तत् कुमारललिता–एतदाख्यं वृत्तं भवति। उदाहरणम्—

'मुरारितनुवल्ली कुमारललिता सा।
व्रजैणनयनानां ततान मुदमुच्चैः॥'

कुमारेण कौमारवयसा ललिता मनोज्ञा सा प्रसिद्धा मुरारेः श्रीकृष्णस्य तनुवल्ली देहलता लतावत् ऋजुदीर्घा देह इत्यर्थः। व्रजैणनयनानां व्रजवासिनां हरिणनयनानां कामिनीनां, उच्चैराधिक्येन मुदं हर्षं ततान—विस्तारयामास जनयामासेति यावत् ॥१४॥

**म्सौ गः स्यान् मदलेखा ॥१५**

म्सौ ग इति। मगण-सगण-गुरवश्चेन् मदलेखा छन्दः। अर्थात् यस्य पादे म् च सश्च म्सौ मगण-सगणौ, तथा गः, एको गुरुश्च स्युरित्यर्थः। चतुर्थ-पञ्चमौ लघु अन्ये च वर्णा गुरवो भवेयुरिति भावः। तत् मदलेखा नाम वृत्तं स्यात्। उदाहरणम्–

'रङ्गे बाहुविरुग्णाद् दन्तीन्द्रान्मदलेखा।
लग्नाऽभून्मुरशत्रौ कस्तूरीरसचर्चा॥'

रङ्गे–युद्धभूमौ बाहुविरुग्णाद् भुजपराजितात् दन्तीन्द्रात् गज-श्रेष्ठात्, कुवलयापीड़ाख्यादिति भावः। मुरशत्रौ मुरारौ, श्रीकृष्ण इति यावत्। लग्ना संक्रान्ता मदलेखा मदवारिरेखा कस्तूरीरसचर्चा मृगनाभिद्रवाङ्गराग इवाभूदित्यर्थः ॥१५॥

**चूड़ामणि स्तभगाः ॥१६**

चूड़ेति। तगण-भगण-गुरवश्चेच्चूड़ामणि छन्दः ॥१५॥

**सरगा हंसमाला ॥१७**

सरगा इति । सगण-रगण-गुरवश्चेद्धंसमाला छन्द. ॥१७॥ छन्दो द्वयमधिकमन्यतः ।

**अष्टाक्षरानुष्टुप्—यथा, चित्रपदा यदि भौ गौ ॥१८**

अष्टाक्षरेति । चित्रेति—यत्र भगणौ गुरु च स्यातां, तच्चित्रपदा छन्दः। अर्थात् यदि चेत् भौ द्वौ भगणौ गौ द्वौ गगणौ च स्याताम्, यस्य पादे प्रथमतो भगणद्वयं ततश्च गुरुद्वयं स्यादिति भावः। तत् 'चित्रपदा' एतन्नामकं वृत्तं भवेत्। अत्र पादान्ते यतिः। उदाहरणम्—'यामुनसैकतदेशे गोपवधूजलकेलौ।
कंसरिपोर्गतिलीला चित्रपदा जगदव्यात् ॥'

यमुनाया अयं यामुनः। तस्येदम् इत्यण्। सचासौ सैकतदेशश्चेति यामुनसैकतदेशः। तस्मिन् यमुनापुलिन इत्यर्थः। गोपवधूनां गोपाङ्गनानां जलकेलौ जलक्रीड़ायां कंसरिपोः कंसारेः श्रीकृष्णस्येत्यर्थः। चित्रं आश्चर्य्यम्, पदं पदविन्यासश्चरण-न्यास इति यावत्, यत्र सा चित्रपदा नानारूपचरणविक्षेपशालिनी गति-लीलागमनपरिपाटी जगद् विश्वम्, अव्यात् पायात् ॥१८॥

**मो मो गो गो विद्युन्माला ॥१९**

मो म इति। यत्र मगणौ गुरु च स्यातां, तद्विद्युन्माला छन्दः। अर्थात् यस्य प्रतिचरणं मो मः द्वौ मगणौ गो गः द्वौ गगणौ च स्यातामित्यर्थः। सर्व्वे एव वर्णा गुरवो भवेयुरिति शेषः। तद् विद्युन्माला नाम वृत्तं भवति। अत्र चतुर्भिश्चतुर्भिर्यतिरिति केचित्। उदाहरणम्—

'वासोवल्ली विद्युन्माला वर्हश्रेणी शाक्रश्चापः।
यस्मिन् सस्तात् तापोच्छित्यै गोमध्यस्थ कृष्णाम्भोदः॥'

यस्मिन् कृष्णम्भोदे वासोवल्ली वसनव्रततिः वल्लीवदतिकोमलमायतञ्च पीतवसनमित्यर्थः, विद्युन्माला तड़िदावलिः, तथा वर्हश्रेणी

शिरोभुषणीकृत-मयूरपिच्छसमूहः, शक्रः शक्रसम्बन्धीचाप इन्द्रधनुरित्यर्थः। स गोमध्यस्थः स वत्सधेनुसमूहमध्यवर्त्ती, पक्षे, गोर्दिङ्मण्डलस्य मध्यस्थ उपरिमध्यभागस्थः दिगन्तचारीत्यर्थः। यद्वा, गौश्च स्वर्गः, गौश्च पृथ्वी तयोर्गवोर्द्यावापृथिव्योर्मध्यस्थः, आकाशचारीत्यर्थः, कृष्ण एव अम्भोदः मेघः कृष्णाम्भोदः पक्षे, कृष्णजलधरः, तापोच्छित्यैर्भक्तानामाध्यात्मिकाधिभौतिकाधिदैविकरूपः तापत्रयोन्मूलनाय, पक्षे–जगन्मण्डलस्य निदाघजनिततापनाशाय, स्ताद्भवतु। नैदाघसन्तापतापितं जगन्मण्डलं मेघो यथा वृष्ट्या शीतलयति तथा अयमपि करुणाम्बुसेकेन भक्तान् सांसारिकदुःखत्रयरहितान् करोत्विति भावः ॥१९॥

### भात्तो लगा माणवकम् ॥२०

भात्तेति। भगण-तगण-लघुगुरवश्चेन्मानवक-छन्दः। अर्थात् यस्य प्रतिपादं भात् भगणात् परमिति शेषः, तश्च लश्च गश्च तलगा स्तगण-लगण-गगणाः स्युः, प्रथम-तुरीय-पञ्चमाष्टमान्यक्षराणि वर्जयित्वा इतराणि लघूनि भवेयुरिति भावः। तत् मानवकं नाम वृत्तं भवति। यतिरत्र पूर्ववत्। मानवक-क्रीड़ितकमिति चास्य ग्रन्थान्तरसम्मतमपरं नामधेयम्। उदाहरणम्—

'चञ्चलचूड़ञ्चपलैर्वत्सकुलैः केलिपरम्।
ध्याय सखे स्मेरमुखं नन्दसुतं माणवकम् ॥'

हे सखे ! चञ्चला चपला चूड़ा शिरोभूषणं यस्ल तं चञ्चलचूड़म्। चपलैश्चञ्चलैरितस्ततो विचरणशीलत्वादिति भावः। वत्सकुलैः वत्ससमूहैः सहेति शेषः, केलिपरं क्रीड़ा तत्परं खेलन्तमिति यावत्, स्मेरम् ईषद् हास्ययुक्तं मुखम्, आननं यस्य तम् इषद्घसन्तमित्यर्थः। माणवकं बालं नन्दसुतं नन्दगोपतनयं श्रीकृष्णं ध्याय चिन्तय ॥२०॥

## म्नौ गौ हंसरुतमेतत् ॥२१

म्नौ गाविति। मगण-नगणौ गुरू च यत्र स्यातां तत् हंसरुतं छन्दः। अर्थात् यस्य प्रतिचरणं म् च नश्च म्नौ मगण-नगणौ गौ द्वौ गगणौ च स्यातामित्यर्थः, चतुर्थ-पञ्चम-षष्ठाक्षराणि वर्जयित्वा सर्वाणि गुरूणि भवेयुरिति भावः। एतत् हंसरुतं नाम वृत्तं भवति। अस्योदाहरणम्—'अभ्यागामिशशिलक्ष्मी मञ्जीर-क्वणिततुल्यम्।
तीरे राजति नदीनां रम्यं हंसरुतमेतत् ॥'
(पिङ्ग, ६ अ० सू० ८) ॥२१॥

## ग्लौ रजौ 'समानिका' तु ॥२२

ग्लाविति। यत्र गुरुलघू-रगण-जगणौ च स्यातां तत् समानिका-छन्दः। छन्दोऽनुरोधात् स्वार्थे कः। उदाहरणम्—

'यस्य कृष्णपादपद्ममस्ति हृत्तडागसद्म।
धीः समानिका परेण नोचिताऽत्र मत्सरे ॥'

यस्य पादे ग् च लश्च ग्लौ गगण-लगणौ, तथा रश्च जश्च रजौ रगण-जगणौ स्यातामित्यर्थः। प्रथम-तृतीय-पञ्चमसप्तमाक्षराणि विहाय सर्वाणि लघूनि स्युरिति भावः। तद्वृत्तं समानिकेति नाम्ना व्यपदिश्यते। उदाहरणं रस्येति, कृष्णपादपद्मं श्रीकृष्णचरणसरोजं यस्य भक्तस्य, हृत् हृदयमेव तड़ागं सरः, तदेव सद्म गृहम्, आश्रय इति यावत्, यस्य तत् तथोक्तं भवतीति शेषः। अत्र तादृशे भक्तश्रेष्ठे मत्सरेण मात्सर्य्ययुक्तेन परेण साधारणलोके समानिका सामान्य-कारिणी, तुल्यताविधायिनीत्यर्थः। नाम णिजन्तात् समानिधातोर्ण्वुलि स्त्रियां रूपम्। धीर्बुद्धिः न उचिता न युक्ता। यो हि निरन्तरं कृष्णं ध्यायति स कदाचित् साधारणजन इव मात्सर्य्यादि वशीभूतो न भवेदिति भावः ॥२२॥

## प्रमाणिका जरौ लगौ ॥२३

प्रमाणिकेति। यत्र जगण-रगणौ लघुगुरू च स्यातां तत् प्रमाणी छन्दः। अर्थात् यस्य पादे जश्च रश्च जरौ जगण-रगणौ, लश्च गश्च लगौ, लगण-गगणौ च स्यातामित्यर्थः। द्वितीय-चतुर्थ-षष्ठाष्टमाक्षराणिगुरूणि तदितराणि च लघूनि भवेयुरिति भावः। तत् प्रमाणिका नाम वृत्तं भवति। ग्रन्थान्तरेऽस्य 'नगस्वरूपिणी' 'प्रमाणी'ति च नामान्तरे। उदाहरणम्—

'पुनातु भक्तिरच्युता सदाऽच्युताङ्घ्रिपद्मयोः।
श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका॥'

श्रुतिर्वेदश्च स्मृतिर्धर्मसंहिता च प्रमाणं यस्याः सा श्रुतिस्मृति-प्रमाणिका श्रुतिस्मृतिलब्धा इत्यर्थः। भवः संसार एव अम्बुराशि-र्दुस्तरत्वात् समुद्रः, तस्मात् तारिका तारणकर्त्री, उद्धारकारिणीति यावत्, अच्युता अचञ्चला शाश्वतिकीत्यर्थः। अच्युतस्य श्रीकृष्णस्य अङ्घ्रिपद्मयोश्चरणसरोजयोः भक्तिः अनुरागः सदा निरन्तरं पुनातु स्वभक्तान् पवित्रयतु ॥२३॥

## वितानमाभ्यां यदन्यत् ॥२४

वितानमिति। अनुष्टुभिजातौ समानिकाभ्यां यदन्यत् छन्दो दृश्यते तद्वितान-संज्ञम्। यथा—

'गोविन्दमब्जलोचनं कन्दर्पदर्पमोचनम्।
संसार-बन्धनाशनं बन्दे हरादि-शासनम्॥' इत्यादि।

अन्ये त्वाहुः—गुरुलघुक्रमेण समानी पादसमाप्तिः, लघुगुरुक्रमेण प्रमाणी पादसमाप्तिः; विताने तु द्वौ गुरू द्वौ लघू द्वौ गुरू इत्यनेन क्रमेण पादसमाप्तिर्भवेदिति। तत्राद्यस्योदाहरणम्—'कृष्णं भजे तृष्णां त्यजे' इत्यादि। द्वितीयस्य तु 'हृदयं यस्य विशाल'मित्यादि। मूलोदाहरणन्तु—जगण-तगण-गुरुलघुरूपम् ॥२४॥

**नाराचिका तरौ लगौ ॥२५**

नाराचिकमिति। यत्र तगण-रगणौ लघुगुरू च स्यातां, तन्नाराचकछन्दः। अर्थात् यस्य पादे तश्च रश्च तरौ, तगण-रगणौ लश्च गश्च लगौ, लगण-गगणौ च स्यातामित्यर्थः। तृतीय-पञ्चम सप्तमवर्णा लघव इतरे च गुरवो भवेयुरिति भावः। तत् नाराचिका नाम वृत्तं भवति ॥२५॥

**पद्ममाला च रौ द्वौ गौ ॥२६**

पद्मेति—यत्र रगणद्वयं गुरुद्वयञ्च स्यात्तत् पद्ममाला छन्दः ॥२६

**सुचन्द्राभा यरौ ग्लौ च ॥२७**

सुचन्द्रेति। यगण-रगणौ गुरुलघू यत्र स्यातां तत् सुचन्द्राभा छन्दः ॥२७॥

**सुविलासा सरौ ग्लौ हि ॥२८**

सुविलासेति। यत्र सगण-रगणौ गुरुलघू च स्यातां, तत् सुविलासा छन्दः। २६-२७-२८ छन्दांसि अधिकानि वर्त्तन्ते ॥२८॥

**नवाक्षरा वृहती—यथा, रान्नसाविह हलमुखी ॥२९**

नवाक्षरेति—रान्नेति। रगण-नगण-सगणश्चेत् हलमुखी छन्दः। अर्थात् यस्य पादे रात् रगणात् परं नश्च सश्च नसौ नगण-सगणौ भवत इति शेषः। प्रथम-तृतीय-नवमान् वर्जयित्वा सर्वे वर्णा लघवः स्युरिति भावः। तत् हलमुखी नाम वृत्तं भवेत्। अत्र त्रिभिः षड्भिश्च यतिरिति हलायुधः। उदाहरणं यथा—

'गण्डयोरतिशयकृशं यन्मुखं प्रकटदशनम्।
आयतं कलहनिरतं तां स्त्रियं त्यज हलमुखीम् ॥'

(पि० ६ अ० ६ सू०) ॥२९॥

**भुजगशिशुसृता नौ मः ॥३० (भृतेति केचित्)**

भुजगेति। यत्र नगणद्वयं मगणश्च स्यात्तद् भुजगशिशुसृता छन्दः स्यादिति। अर्थात् यस्य पादे नौ द्वौ नगणौ मः एको मगणश्च स्युरित्यर्थः। प्रथमाः षड् लघवोऽन्त्याश्च त्रयो वर्णा गुरवो भवेयुरिति भावः। तत् भुजगशिशुसृता नाम वृत्तं भवेत्। अत्र सप्तभिर्द्वाभ्याञ्च यतिरिति हलायुधः। उदाहरणम्—

'ह्रदतटनिकटक्षौणी भुजगशिशुभृता यासीत्।
मुररिपुदलिते नागे व्रजजनसुखदा साऽभूत्॥'

या ह्रदतटनिकटक्षौणी कालियह्रदतीरसरसन्निहिता भूमिः, भुजगशिशुभिः सर्पशावकैः भृता पूरिता आसीत्, नागे कालियाख्ये इत्यर्थः, मुररिपुणा मुरशत्रुणा श्रीकृष्णेनेति यावत्, दलिते पराभवं प्रापिते सति सा क्षौणी व्रजजनानां सम्बन्धे सुखदायिका अभूत्। पूर्वं व्रजवासिनः कालियभयाद् यत्र विहर्त्तुमसमर्था आसन्, सम्प्रति तत्र कृष्णेन कालियस्य पराभूतत्वाद् यथेच्छं विचरन्तीति भावः॥३०

**स्यात् 'मणिमध्यं' चेद् भमसाः ॥३१**

यत्र भगण-मगण-सगणाः स्युः तन्मणिमध्यछन्दः। अर्थात् चेद् यदि भश्च मश्च सश्च भमसाः भगण-मगण-सगणाः स्युरिति शेषः। प्रतिपादं द्वितीय-तृतीय-सप्तमाष्टमाक्षराणि वर्जयित्वा अन्यानि दीर्घाणि भवेयुरिति भावः। तदा तत् मणिमध्यं नाम वृत्तं स्याद् भवेत्। उदाहरणं यथा—

'कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा।
चित्रपदा भो नन्दसुतश्चारु ननर्त्त स्मेरमुखः॥'

कालियस्य तन्नाम्ना प्रसिद्धस्य सर्पस्य यो भोगः फणा यस्य स आभोगः विस्तारः, मण्डलाकारेण परिणतिरित्यर्थः, तं गत-स्तत्रावस्थितः, पद्भ्यां कालियस्य फणामारूढ इति भावः। इदं

नन्दसुतविशेषणम् । अतएव तस्य कालियस्य यो मणिः शिरोरत्नम्, तन्मध्ये स्फीततावर्द्धितया रुचा दीप्तया चित्रा शबला पदयोराभा कान्तिर्यस्य स तथोक्तः, विचित्रित चरणशोभ इत्यर्थः । स्मेरम् ईषद्धास्ययुक्तं मुखम्, आननं यस्य स तादृशः, नन्दसुतः नन्दगोपतनयः श्रीकृष्ण इति यावत् । चारु मनोज्ञं यथा स्यात्तथा ननर्त्त ॥३१॥

### सजरैं 'भुजङ्गसङ्गता' ॥३२

सजरैरिति । यत्र सगण-जगण-रगणा भवन्ति तद् भुजङ्गसङ्गता छन्दः ॥३२ अर्थात् यस्य पादः सश्च जश्च रश्च सजराः, सगण-जगण-रगणाः, तैः घटितो भवतीति शेषः, यत्र तृतीय-पञ्चम-सप्तम-नवमवर्णा गुरवः शिष्टाश्च लघव इति भावः । तत् भुजङ्गसङ्गता नाम वृत्तं स्यात् । उदाहरणम्—

'तरलतरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।
कथमेति वत्सचारकश्चपलः सदैव तां हरिः ॥'

या यमुनातरङ्गाणां ऊर्मीणां रिङ्गितैर्गमनैः, निरन्तरं प्रवाहमाणैस्तरङ्गैरित्याशयः तरला चपला, तथा भुजङ्गैः सर्पैः सङ्गता व्याप्ता, तामेव यमुनामेव नान्यामित्यर्थः, वत्सानां गोवत्सानां चञ्चलानामित्यर्थः, चारकः पालकः चपलः स्वयञ्च चञ्चलः हरिः कृष्णः सदा निरन्तरं कथम् एति गच्छति ? स्वस्य वत्सानाञ्चातिचञ्चलत्वात् तरङ्गचपलानां भुजङ्गसङ्कुलायाञ्च तस्यां नैरन्तर्य्येण हरेर्गमनं न निष्प्रत्यूहमेवेति भावः ॥३२॥

**छन्दो मञ्जर्य्यामत्र विशेषः**—'भद्रिका' भवति रो नरौ' यस्य प्रतिपादं रः रगणः नरौ नगण-रगणौ च स्युरित्यर्थः, प्रथम-तृतीय-सप्तम-नवमाक्षराणि गुरूणि इतराणि च लघूनि भवेयुरिति भावः । तद्भद्रिका नाम वृत्तं भवति ।

'द्विगुणनगणसहितः सगण इह विहितः।
फणिपतिमतिविमला क्षितिप भवति कमला॥'

हे क्षितिप राजन्, इह अस्मिन् छन्दो निर्णय प्रस्तावे यस्य पादे द्विगुणगणसहितः द्विरावृत्तनगणयुक्तः सगणः विहितः कृतः, आदौ द्वौ नगणौ ततश्चैकः सगणः स्यादित्यर्थः। अन्त्यं विहाय सर्वे वर्णा लघवो भवेयुरिति भावः। तत् फणिपतेरनन्तनागस्य पिङ्गलमुनेरिति यावत्, या मतिः, प्रज्ञा तद्वद्विमला निर्मला कमला तदाख्ये वृत्तं भवेदित्यर्थः।

'अङ्कोन्माना वर्णा यत्र स्युः, सर्वे दीर्घाः सर्पेशेनोक्तम्।
'रूपामाली' संज्ञं तद्वृत्तं, यस्मिंश्चेतः केषामुद्वृत्तम्॥'

यत्र यस्मित् नवाक्षरवृत्ते सर्वे अङ्कोन्माना अङ्कपरिचिताः नवेत्यर्थः, वर्णा अक्षराणि दीर्घा गुरवः स्युर्भवेयुः, प्रतिपदं सर्वाण्यैवाक्षराणि गुरूणि भवेयुरिति भावः। तद् वृत्तं सर्पेशेन नागराजेन पिङ्गलाचार्य्येण वर्णितमित्यर्थः। यस्मिन् रूपामाली संज्ञके वृत्ते केषां जनानां चेतो मानसम् उत्क्षिप्तम् आसक्तिहीनम्? केऽपि जना वृत्तमिदं नाद्रियन्त इति नेति भावः॥

**दशाक्षरा पङ्क्तिः-यथा, रुक्मवती सा यत्र भगौ सगौ।।३३**
(रूपवतीति चम्पकमालेति क्वचित्)

दशाक्षरेति—रुक्मेति। यत्र भगण-मगणौ सगण-गुरु च स्यातां तद् रुक्मवती छन्दः। अर्थात् भ, म, स, ग, यत्र छन्दसि प्रतिपादं भश्च मश्च स् च गश्च भमस्गाः, भगण-मगणौ सगण-गगणौ च स्युरित्यर्थः। प्रथम-तुरीय-पञ्चम-षष्ठ-नवम-दशमवर्णा गुरवः शिष्टाश्च लघवो भवेयुरिति भावः। तद् रुक्मवती एतन्नामकं वृत्तं भवति। ग्रन्थान्तरेष्वस्य 'रूपवती' 'चम्पकमाले'ति च नाम्ना व्यपदेशः। उदाहरणम्—

'कायमनोवाक्यैः परिशुद्धैर्यस्य सदा कंसद्विषि भक्तिः।
राज्यपदे हर्म्यालिरुदारा रुक्मवती विघ्नः खलु तस्य॥'

यस्य जनस्य सदा निरन्तरं परिशुद्धैः विमलैः कायमनोवाक्यैः शरीरमनोवाग्भिः, कायेन मनसा वाचा चेत्यर्थः। कंसद्विट् कंसारिः कृष्णः, तस्मिन् भक्तिरनुरागः, जायत इति शेषः। तस्य जनस्य सम्बन्धे राज्ञः कर्म्म राज्यं तस्य पदे आधिपत्यं सतीति शेषः। राजकर्म्माधिकारे भवतीति भावः। रुक्मवती काञ्चनमालिनी सुवर्णमयीत्यर्थः। उदारा उन्नता प्रशस्त वा हर्म्यालिः सौधश्रेणी विघ्नः खलु भक्तिप्रतिबन्धकत्वादन्तराय एव। विषयभोगो हि जनं भक्ते भ्रंशयतीति भावः॥३३॥

**ज्ञेया 'मत्ता' म-भ-स-ग-सृष्टा॥३४**

ज्ञेयेति। मगण-भगणौ सगण-गुरू च यदि स्यातां, तर्हि 'मत्ता' छन्दः॥३४ अर्थात् या मश्च भश्च सश्च गश्च मभसगाः, मगण-भगणौ सगण-गगणौ चेत्यर्थः, तैः सृष्टा रचिताः यस्याः पादे प्रथमतो मगण-भगणौ अनन्तरञ्च सगण-गगणौ स्यातामिति भावः। सा मत्ता तन्नामिका ज्ञेया विद्वद्भिरिति शेषः। अत्र चतुर्भिः षड्भिश्च यतिरिति हलायुधः। उदाहरणम्—

'पीत्वा मत्ता मधुमधुपाली कालिन्दीयं तटवनकुञ्जे।
उद्दीव्यन्तीर्व्रजजनरामाः कामासक्ता मधुजितिचक्रे॥'

कालिन्द्या इदं कालिन्दीयं यामुनम्, तस्मित् यमुना-सम्बन्धिनीत्यर्थः, तटस्थं यद् वनं तत् तटवनं तीरस्थमरण्यम्, तत्र विद्यमानं यत् कुञ्जं लतादिपिहितोदरं स्थानं तस्मिन् तटवनकुञ्जे, मधु मकरन्दं पीत्वा मत्ता क्षीवा पुष्पात् पुष्पान्तरं सञ्चरन्तीत्यर्थः, मधुपाली भ्रमरपङ्क्तिः, उद्दीव्यन्तीरतिशयेन क्रीड़न्तीः, व्रजजनरामाः व्रजजनबधूः, मधुजिति श्रीकृष्णे तद्विषय इत्यर्थः, कामासक्ताः

कामोत्सुकाः चक्रे कृतवती। मधुमत्तमधुपानां कार्य्यपर्य्यालोचनया व्रजाङ्गनाः कृष्णेन रन्तुमभिलषितवत्य इति भावः ॥३४॥

**म्सौ ज्गौ शुद्धविराडिदं मतम् ॥३५**

म्सौ जिति। मगण-सगणौ जगण-गुरू च यदि स्यातान्तदा शुद्धविराट् छन्दः। अर्थात् यस्य प्रतिपादं म् च सश्च मसौ मगण-सगणौ तथा ज् च गश्च ज्गौ जगण-गगणौ च स्यातामित्यर्थः। तुरीय-पञ्चम-सप्तम-नवमाक्षराणि लघूनि शिष्टानि च गुरूणि भवेयुरिति भावः। तत् इदं शुद्धविराट् तन्नामकं वृत्तं मतं कविभिरिति शेषः। अत्र पादान्ते यतिरिति हलायुधः।

अस्योदाहरणम्—'विश्वं तिष्ठति कुक्षिकोटरे
वक्त्रे यस्य सरस्वती सदा।
अस्मद्वंशपितामहो गुरु-
र्ब्रह्मा शुद्धविराट् पुनातु नः॥'
(पिङ्ग, ६।१०।३५)

**म्नौ य्गौ चेति 'पणव' नामेदम् ॥३६**

म्नौयिति। मगण-नगण-यगण-गुरवो यदि स्युस्तदा 'पणव' छन्दः। अर्थात् यस्य पादे म् च नश्च म्नौ मगण-नगणौ य् च गश्च य्गौ यगण-गगणौ चेति पणव स्युरित्यर्थः। चतुर्थ-पञ्चम-षष्ठ-सप्तमवर्णान् विहाय सर्वे गुरवो भवेयुरिति भावः। इदं तत् पणव संज्ञकं वृत्तं भवति। अत्र पञ्चभिः पञ्चभिर्यतिरिति हलायुधः। अस्योदाहरणम्—

'मीमांसारसममृतं पीत्वा शास्त्रोक्तिः पटुरितरा भाति।
एवं संसदि विदुषां मध्ये जल्पामो जयपणवन्धत्वात् ॥'३६॥
(पिङ्ग, ६।०।११)

### र्जौ रगौ मयूरसारिणी स्यात् ॥३७

यत्र रगण-जगणौ रगण-गुरू च स्यातान्तन्मयूरसारिणी छन्दः। अर्थात् यस्य पादे र् च जश्च र्जौ रगण-जगणौ रश्च गश्च रगौ रगण-गगणौ च स्यातामित्यर्थः। द्वितीय-तुरीय-षष्ठाष्टमवर्णा लघवोऽन्ये च गुरवः स्युरिति भावः। तत् मयूरसारिणी नाम वृत्तं भवति। अत्र पादान्ते यतिरिति हलायुधः। अस्योदाहरणम्—

'या वनान्तराप्युपैति रन्तुं या भुजङ्गभोगमुक्तविद्या।
या द्रुतं प्रयाति सन्नतांसा तां मयूरसारिणीं विजह्यात् ॥'३७॥

(पिङ्ग, ६।१३)

### त्वरितगतिश्च न-ज-न-गैः ॥३८

त्वरितेति। नगण-जगण-नगण-गुरुभिस्त्वरितगतिश्छन्दः। अर्थात् यस्य पादः नश्च जश्च नश्च गश्च नजनगाः तैः, घटितः स्यादिति शेषः। प्रतिपादं पञ्चम-दशमवर्णौ वर्जयित्वा सर्वे लघवो भवेयुरिति भावः। तत् त्वरित्गतिर्नाम वृत्तं भवति। अस्य 'अमृतगतिः' इति काचित्कं नामान्तरम्। उदाहरणम्—

'त्वरितगतिर्व्रजयुवतिस्तरणिसुता विपिनगता।
मुररिपुणा रतिरिपुणा सह मिलिता प्रमदमिता ॥'

त्वरिता त्वरान्विता, शीघ्रेति यावत्, गतिर्गमनं यस्याः सा त्वरितगतिः शीघ्रगमना, व्रजयुवतिः व्रजाङ्गना, तरणेः सूर्य्यस्य या सुता यमुना तस्या विपिनं तत्तीरस्थं वनं गता प्राप्तासती, रतिगुरुणा सुरतोपदेशकेन मुररिपुणा कृष्णेन सह मिलित्वा सङ्गता, 'परिरमिते'ति पाठे तु सङ्गमितेत्यर्थः, सती, प्रमदम् आनन्दम् इता प्राप्तवती ॥३८॥

**न-र-ज-गैर्भवेत् मनोरमा ॥३६**

नरेति। नगण-रगण-जगण-गुरुभिर्मनोरमा छन्दः। अर्थात् यस्य प्रतिचरणं नश्च रश्च जश्च गश्च नरजगाः, तैः घटितं भवतीति शेषः, यस्यामादौ नगण-रगणौ ततश्च जगण-गगणौ भावः। तत् मनोरमा तन्नामकं वृत्तं भवेत्। उदाहरणम्—

'तरणिजातटे विहारिणी व्रजविलासिनी विलासतः।
मुररिपोस्तनुः पुनातु वः सुकृताशालिनां मनोरमा॥'

व्रजविलासिनीषु व्रजाङ्गनासु विलासतः विहारार्थमित्यर्थः। तरणिजायाः सूर्य्यतनयायाः कालिन्द्या इति यावत्, तटे कुले विहारिणी विचरन्ती, सुकृतं पुण्यम्, तेन शालन्ते शोभन्ते इति सुकृतशालिनः पुण्यवन्तः, तेषां मनोरमा मनोहारिणी अकृतपुण्यानां तद्प्रत्यक्षत्वादिति भावः, मुररिपोः कृष्णस्य तनुमूर्त्तिः वः युष्मान् पुनातु पवित्रयतु॥३९॥

**छन्दो मञ्जर्य्यामत्र विशेषः—**

**तो जौ गुरुणेय 'मुपस्थिता'।**

यस्याः प्रतिपादं तः एकस्तगणः जौ द्वौ जगणौ च गुरुणा अन्तिमेन एकेन गुर्वक्षरेणेत्यर्थः। उपलक्षिताः स्युरिति शेषः, तृतीय-चतुर्थ-षष्ठ-सप्तम-नवमाक्षराणि परित्यज्य इतराणि गुरूणि भवेयुरिति भावः। इयं सा उपस्थिता नाम वृत्तं भवति। अत्र द्वाभ्यामष्टाभिश्च यतिरिति हलायुधः। अस्योदाहरणम्—

'एषा जगदेकमनोहरा कन्या कनकोज्ज्वल दीधितिः।
लक्ष्मीरिव दानवसादनं पुण्यैर्नरनायमुपस्थिता॥'

(पिङ्ग, ६।१५)

**'दीपकमाला' भ्मौ मता जगौ ।**

यस्याः पादे भ् च मश्च भ्मौ भगण-मगणौ जश्च गश्च जगौ जगण-गगणौ च स्यातामित्यर्थः, द्वितीय-तृतीय-सप्तम-नवमवर्णा लघवः शिष्टाश्च गुरवो भवेयुरिति भावः। सा दीपकमाला मता कथितेत्यर्थः, विद्भिरिति शेषः।

**ज्ञेया 'हंसी' म-भ-न-ग-युता ।**

मश्च भश्च नश्च गश्च मभनगाः, मगण-भगण-नगण-गगणाः तैर्युता अन्विता युक्तेति यावत्, लघूभूत पञ्चम-षष्ठ-सप्तमाष्टम-नवमाक्षरेति भावः, हंसी तदाख्यं वृत्तं ज्ञेया अवगन्तव्या ॥३९॥

**( ११ )**

**एकादशाक्षरा त्रिष्टुप्—यथा,**

**स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥४०**

एकादशाक्षरेति—स्यादिन्द्रेति। यत्र तगण-द्वयं जगणौ गुरुद्वयञ्च स्यात्तदिन्द्रवज्राछन्दः। अर्थात् यदि चेत् छन्दसः प्रतिपादमादौ तौ द्वौ तगणौ, अनन्तरं जगौ जगण-गगणौ गः ततोऽप्येको गुरुश्च भवेयुरित्यर्थः। यत्र तृतीय-षष्ठ-सप्तम-नवमाक्षराणि ह्रस्वानि शेषाणि च दीर्घाणि स्युरिति भावः। तदा तत् इन्द्रवज्रा तन्नामकं वृत्तं भवति। अत्र पादान्त यतिरिति हलायुधः। उदाहरणम्—

'गोष्ठे गिरिं सव्यकरेण धृत्वा रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ।
यो गोकुलं गोपकुलञ्च सुस्थं चक्रे सनो रक्षतु चक्रपाणिः॥'

यः रुष्टेन्द्रवज्राहतमुक्तवृष्टौ क्रुद्धेनेन्द्रेण सवज्रापातकृतवर्षणे इत्यर्थः। गोष्ठे गोचारणस्थाने, 'गोष्ठं गोस्थानकम्' इत्यमरः। गोष्ठः

पुंस्यपि, सव्यकरेण वामहस्तेन 'वामेनैकेन लीलया' इति भागवतात्, गिरिं गोवर्द्धननामकं पर्वतं धृत्वा छत्राकमिव गोवर्द्धनमुपरि कृत्वेत्यर्थः। गोकुलं गोसमूहं गोपकुलं व्रजवासिजनगणञ्च सुस्थम् अन्तरायविहीनं चक्रे कृतवान्। यो दक्षिणेतरकरेणोपरि गोवर्द्धनं धारयित्वा स्वपर्य्याव्याघातरुष्टस्य वज्रपाणेः सतात् व्यापिना वज्रपातपूर्व्वकवर्षणेनोद्वेजितं गोयूथं गोपगणञ्च तारयामासेति भावः। स चक्रं पाणौ यस्य स चक्रपाणिः कृष्णः, नः अस्मान् अवतु रक्षतु पातु। रुष्टेन्द्रवज्राहतिमुक्तावृष्टावि'त्यत्र पूर्वं रुष्ट इन्द्रो यत्र तथाविधा वज्राहतिर्यत्रेति व्यधिकरण-बहुव्रीहि र्वा, ततश्चापि मुक्तवृष्टिर्यत्रेति। पुनर्गोष्ठान्यपदार्थो बहुव्रीहिः, पश्चादुभयो कर्म्मधारयः। अस्माभिः पुन 'र्युक्तवृष्टौ' इति युक्तः पाठः सम्भाव्यते, एवं हि स्वरसतोऽर्थोपस्थितिर्भवेत्। अत्रत्या पुरातनवार्त्ता श्रीमद्भागवतस्य १०।२५।१-२८ श्लोकेषु अनुसन्धेया ॥४०

## उपेन्द्रवज्रा ज-त-जा स्ततो गौ ॥४१

उपेन्द्रेति। जगण-तगण-जगण-गुरुद्वयञ्च यदि भवन्ति, तदोपेन्द्रवज्रा छन्दः। अर्थात् 'उपेन्द्रवज्रा प्रथमे लघौ सा' ज त ज ग ग, प्रथमे आद्ये वर्णे लघौ ह्रस्वे सतीत्यर्थः। सा प्रागुक्ता इन्द्रवज्रा एव उपेन्द्रवज्रा नाम वृत्तं भवेत्। यत्र प्रथमं जगण-तगणावनन्तरञ्च जगण-गगणौ गुरुश्चैकः स्युस्तत् उपेन्द्रवज्रा वृत्तमित्याशयः। वृत्तरत्नाकरे 'उपेन्द्रवज्रा जतजास्ततो गौ' इत्यस्य गणनिर्देशः। इन्द्रवज्रायां प्रतिपादं प्रथमस्तगणः, अस्यान्तु जगण इत्यनयोर्भेदः। अत्रापि पादान्तगा यतिरिति हलायुधः। उदाहरणम्—

'उपेन्द्रवज्रादिमणिच्छटाभिर्विभूषणानां छुरितं वपुस्ते।
स्मरामि गोपोभिरुपास्यमानं सुरद्रुमूले मणिमण्डपस्थम् ॥'

हे उपेन्द्र कृष्ण ! सुरद्रोः कल्पवृक्षस्य मूले तले यो मणिमण्डपस्तन्त्रशास्त्रप्रसिद्धं मणिमयगृहं तत्र तिष्ठतीति तथोक्तम्। कल्पवृक्षमूले मणिनिर्मित-मन्दिरे वर्त्तमानमित्यर्थः। विभूषणानां अलङ्काराणां ये वज्रादि-मणयः, हीरकादिरत्नानि तेषां छटाभिः प्रभाभिः छुरितं रञ्जितं गोपीभिः गोपाङ्गनाभिः उपास्यमानं सेव्यमानञ्च, ते तव वपुः शरीरं स्मरामि भावयामि ॥४१॥

**अनन्तरोदीरित लक्ष्मभाजौ,**
**पादौ यदीयावुपजातयस्ताः ।**
**इत्थं किलान्यास्वपि मिश्रितासु,**
**वदन्ति जातिष्विदमेव नाम ॥४२**

अनन्तरेति। यदीयौ पादौ अनन्तरोदीरित-लक्ष्मभाजौ इन्द्रवज्रोपेन्द्रवज्रालक्षणयुक्तौ स्यातां ता उपजातयो भवेयुः, भेदान्तरोपलक्षणमेतत्। इत्थमुपजातिषु प्रागुक्ता स्वतःपरं वक्ष्यमाणासु च मिलितासूपजातयो भवन्ति। जगत्यां यथा वंशस्थविलेन्द्रवंशयोर्योगे ता बोध्याः। तथैव त्रिष्टुभिः स्वागतारथोद्धतयोरपि प्रस्तारपथेन चतुर्द्दशोपजातयः स्युः।४२

अर्थात् यदीयौ यद्वृत्तसम्बन्धिनौ पादौ चरणौ, अनन्तरं अव्यवधानं यथा स्यात्तथा उदीरितयोः कथितयोः, एतल्लक्षण-प्रस्तावात् पूर्वमुक्तयोरिन्द्रवज्रोपेन्द्रवज्रयोरित्यर्थः, लक्ष्मभाजौ लक्षणभागिनौ स्यातामिति शेषः। ता उपजातयस्तदाख्यानि वृत्तानि स्युः। पादाविति विशेषानुल्लेखाद् द्विवचननिर्द्देशाच्च ययोः कयोश्चित् पादयोरेव यथोक्तलक्षणाक्रान्तत्व तात्पर्य्यमवसेयम्। इतरयोस्तु यथेष्टमिन्द्रवज्रालक्षणाक्रान्तत्वमुपेन्द्रवज्रालक्षणाक्रान्तत्वं वा। तेन 'मुखारविन्दैर्व्रजसुन्दरीणामि'त्याद्युदाहरणे एकस्य

प्रथम-तृतीययोरपरस्य च द्वितीय-चतुर्थयोः पादयोः, 'काचिन्मुरारेर्वचनारविन्दमि'त्यादौ एकस्य प्रथमद्वितीयतृतीयानाम्, अन्यदीयस्य च तुरीयपादस्य सत्यादुक्तलक्षणासङ्गतिभावनापरास्ता। इत्थमेव च 'उपजातयः' इति बहुवचनमपि साधु सङ्गच्छते भेदबाहुल्यसम्भवात्। अन्यथा द्वयोर्द्वयोः पादयोरेकैकलक्षणाक्रान्तत्वे भेदाभावात् बहुवचनमनाश्रयं स्यात्।

एवञ्च इन्द्रवज्रायां अन्तिमपादत्रयगतत्वे एक आदिपादत्रयगतत्वे चापर इति द्वौ उपेन्द्रवज्रायास्तथात्वे द्वाविति चत्वारि, अनयोराद्यार्द्धगतत्वे द्वौ, तथास्तृतीयपादमात्रगतत्वे च द्वावित्याष्टौ, एवमनयोरेकान्तरितत्वे द्वौ, मध्यपादद्वयगतत्वे च द्वाविति द्वादश, तथानयोर्द्वितीयपादगतत्वे द्वाविति, संहृत्य चतुर्द्दशभेदाः। एते च भेदाः सोदाहरणाः साभिधानाः प्राकृत-पिङ्गलादौ द्रष्टव्याः। एवं वंशस्थेन्द्रवंशयोः शालिनीवातोर्म्योरन्येषाञ्च वृत्तानां साङ्कर्य्यात् वक्ष्यमाणलक्षणानां यथायोगं जातानामुपजातीनां भेदा द्रष्टव्याः। संगृहीतश्चायमर्थो वृद्धैः—

'एकस्य पादे चरणद्वये वा
पादत्रये वाऽन्यतरः स्थितश्चेत्।
तयोरिहान्यत्र तथोहनीया
श्चतुर्द्दशोक्ता उपजातिभेदाः॥' इति।

अनुभवसाम्यादन्यत्राप्युपजातिलक्षणमतिदिशति—इत्थमिति। इत्थम् अनेन प्रकारेण प्रागुक्तरीत्येत्यर्थः। यद्वा, इत्थम् अनन्तरोदीरितलक्ष्मभाक्तया, अस्यामयमर्थः—अनन्तरोदीरिते अव्यवधानेनोक्ते ये लक्ष्मणी तद्भाक्तया, ययोर्वृत्तयोर्लक्षणे तुल्यवर्णादिवशात् समीपवर्त्तिनी अर्थात् समे स्यातामित्यर्थः। 'तस्य कक्षां विगाहते' इतिवत् अनन्तरशब्दोऽत्र उपमा वाचकः। अन्यासु

अपरासु जातिषु, अत्र जातिपदं वृत्तिपरम्। जातिषु वृत्तिषु तल्लक्षणेष्वित्यर्थः। मिश्रितासु पादभेदेनैकत्र पद्ये समाविष्टासु सतीषु, अपिरत्र चार्थः।

यद्वा, जातिष्वित्यधिकरण-सप्तमीयम्। तथा च अन्यासु अपरासु मिश्रितासु पादभेदेनैकत्र पद्ये समाविष्टासु जातिष्वपि वृत्तिलक्षणेषु चेत्यर्थः। इदमेव उपजातिरित्येव नाम संज्ञां वदन्ति कथयन्ति। न तु पृथक् छन्दोद्वयमिति भावः। किल इति निश्चये। केचित्तु—जातिषु मात्रानियमितछन्दःसु तल्लक्षणेष्विति यावत्, अपिना वृत्तिषु वृत्तिलक्षणेष्विति यावत्, मिश्रितासु पादभेदेनैकत्र पद्ये समाविष्टासु सतीष्वित्यभिधाय मिश्रणन्तत्र तात्पर्य्यतो जात्या जातेर्वृ त्त्या च वृत्तेर्न तु जात्या, वृत्तेः, वृत्त्या च जातेरित्येवमाचक्षते।

अस्माकन्तु वृत्तिलक्षणप्रस्तावान्तःपातित्वाद् जातिद्वयमिश्रणरूपायाश्चौपजातेर्दुरुदाहरणत्वात् तादृगर्थप्रकल्पनं न सर्वमनोरममिति भावः। उदाहरणानि—

काचिन्मुरारेर्वदनारविन्दं संकान्तमालोक्य जले नवोढ़ा।
व्यक्तं सलज्जा परिचुम्बितुं तत् तदर्थमेवाम्भसि निर्ममज्ज ॥१॥

मुखारविन्दैर्व्रजसुन्दरीणामामोदमत्युत्कटमुद्गिरद्भिः।
अहारिचित्तेन समं मुरारेर्हेमाम्बुजेभ्योऽपि मधुव्रतौघः ॥२॥

तोयेषु तस्याः प्रतिविम्बितासु व्रजाङ्गनानां नयनावलीषु।
स्वबधुपङ्क्ति भ्रमतोऽतिमुग्धा गोष्ठीं शफर्य्योरचयाम्बभूवुः ॥३॥

१। नवोढ़ा नवविवाहिता अचिरपरिणीतेत्यर्थः, काचित् स्त्री, एतेनास्या लज्जाधिक्यं ध्वनितम्, मुरारेः कृष्णस्य वदनारविन्दं मुखकमलं व्यक्तं प्रकाशं यथास्यात्तथा, लोकसमक्षमिति भावः। परिचुम्बितुं सलज्जा लज्जमाना सतीषु जले, यमुनासलिले,

निर्ममज्ज निमग्ना बभूव। अत्र प्रथमपादत्रयं इन्द्रवज्रायाश्चतुर्थश्चोपेन्द्रवज्राया इति परस्पर-साङ्कर्य्यादुपजातिः।

२। मुखारविन्दैर्व्रजसुन्दरीणामामोदमत्युत्कटमुद्गिरद्भिः।
अहारिचित्तेन समं मुरारेर्हेमाम्बुजेभ्योऽपि मधुव्रतौघः॥

मुखारेति। अत्युत्कटं निरतिशयम् अत्यधिकमिति यावत्, आमोदं सौरभम्, उद्गिरद्भिः वमद्भिः, अत्यधिकसौरभयुक्तैरित्यर्थः। व्रजसुन्दरीणां गोपाङ्गनानां मुखारविन्दैः वदनकमलैः, हेमाम्बुजेभ्योऽपि सुवर्णवर्णपद्मेभ्योऽपि, न केवलं गन्धतः वर्णतोऽप्युत्कृष्टेभ्य इति भावः, मधुव्रतानां भ्रमराणां औघः समूहः मुरारेः कृष्णस्य चित्तेन मनसा समं सह अहारि हृतः। व्रजसुन्दरीणामाननान्यवलोक्य कमलबुद्धया यथा मधुकरा आकृष्टास्तथा श्रीकृष्णोऽप्याकृष्ट इति भावः। अत्र प्रथम-तृतीयावुपेन्द्रवज्राया द्वितीय-चतुर्थौ च पादाविन्द्रवज्राया लक्षणाक्रान्तौ इत्यनयोः साङ्कर्य्यादुपजातिः।

३। तोयेषु तस्याः प्रतिविम्बितासु व्रजाङ्गनानां नयनावलीषु।
स्वबधुपङ्क्ति भ्रमतोऽतिमुग्धा गोष्ठीं शफर्य्यो रचयाम्बभूवुः॥

तोयेष्विति। अतिमुग्धा अतिमनोज्ञाः, अथच अतिमुग्धा अत्यज्ञाः मत्स्यत्वादिति भावः। शफर्य्यः प्रोष्ट्यः, प्रोष्ठीति ख्याताः क्षुद्रमत्स्यविशेषाः, तस्या यमुनायाः तोयेषु सलिलेषु प्रतिविम्बितासु संक्रान्त-प्रतिमासु प्रतिफलिताष्विति यावत्, व्रजाङ्गनानां व्रजबधूनां नयनावलीषु नेत्रपङ्क्तिषु, स्वबधूनां सजातीयानां या पङ्क्तिः सङ्घः। तस्या यो भ्रमो भ्रान्तिः सफरीसङ्घभ्रान्तिरित्यर्थः। तस्मात् गोष्ठीं सभां रचयाम्बभूवुः। एता अस्मत् सजातीयास्तद्वयमप्याभिर्मिलिता भवाम इति बुद्धया बह्वयस्तत्र समवेता बभूवुरिति भावः। अत्र प्रथम-चतुर्थाविन्द्रवज्राया द्वितीय-तृतीयौ च पादादुपेन्द्रवज्राया लक्षणभाजाविति परस्पर-साङ्कर्य्यादुपजातिः।

यथेन्द्रवज्रोपेन्द्रवज्रयोर्मेलनाद् उपजातिरित्युक्तमुदाहृतञ्च तथा वंशस्थेन्द्रवंशयोरपि साङ्कर्य्यमुदाहर्त्तव्यम्। उदाहरति—(माघे १२।१),

'इत्थं रथाश्वेभनिषादिनां प्रगे गतो नृपाणामथ तोरणाद्बहिः।
प्रस्थानकालक्षमवेषकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम् ॥'

शिशुपालवधस्य द्वादशसर्गीय प्रणमश्लोकोऽयम्। 'अथ सूर्य्योदयानन्तरम्', इत्थम् एवं विधे पूर्वसर्गोक्त प्रकारे प्रगे प्रातःकाले 'सायं साये प्रगे प्रातः' इत्यमरः। रथाश्च अश्वाश्च इभाश्च रथाश्वेभम्, तस्मिम् निषीदन्तीति तेषां रथाश्वेभनिषादिनाम्, रथेषु अश्वेषु इभेषु च स्थितानामित्यर्थः। नृपाणां राज्ञां गणः समूहः, तोरणाद् बहिर्द्वारात् बहिः बाह्यदेशे, प्रस्थानकाले प्रयानकाले यात्रासमय इति यावत्, क्षम उचितो यो वेष आकल्पः, 'आकल्पवेषौ नेपथ्यम्' इत्यमरः। तस्य कल्पनया रचनया कृतो विहितः क्षण क्षेपः, कालविलम्बो येन तम्, प्रयाणकालोचितवेष-रचनया कृतविलम्बमिति भावः। अच्युतं हरिमुदैक्षत प्रतीक्षित-वानित्यर्थः। अत्र प्रथम-तृतीयाविन्द्रवंशायाद्वितीय-चतुर्थौ च पादौ वंशस्थस्य लक्षणाक्रान्तानित्यनयोः साङ्कर्य्यादुपजातिः ॥४२॥

**त्जौ जगौ गुरुणेयमुपस्थिता स्यात् ॥४३**

त्जौ गिति। तगणो जगणद्वयं गुरुद्वयञ्च यत्र स्यात्तदुपस्थिता छन्दः ॥४३॥ अत्र वैशिष्ट्यम्।

**न-ज-ज-ल-गैर्गदिता सुमुखी ॥४४**

नजेति। नगणो जगणद्वयं लघुगुरू च यदि स्युस्तदा सुमुखी छन्दः। अर्थात् यस्य प्रतिपादं नश्च जश्च जश्च लश्च गश्च नजजलगास्तैस्तथोक्तैर्गणैरित्यर्थः। घटितं भवतीति शेषः। अत्र

पञ्चमाष्टमैकादशाक्षराणि विहाय सर्वाण्यक्षराणि लघूनि भवेयुरिति भावः। सा सुमुखी, तन्नामकं वृत्तं गदिता अभिहिता विद्वद्भिरिति शेषः। उदाहरणम्—

'तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः।
तिमिरमुदस्य वृतं सुमुखी हरिमवलोक्य जहास चिरम्॥'

तरणीति। सुमुखी सुवदना काचिद् व्रजरमणी, तरणीसुतायाः कालिन्द्याः तटे तीरप्रदेशे यत् कुञ्जगृहं लतादिपिहिताभ्यन्तरं गृहम्, तस्मिन् यमुनातीरवर्त्तिलतामण्डपे इत्यर्थः। वदनं मुखमेव विधुश्चन्द्रः, तस्य यानि स्मितानि ईषद्धासास्तान्येव दीधितयः किरणाः, ताभिः मुखचन्द्रस्येषद्धासरूपकिरणैरित्यर्थः। तिमिरं अन्धकारं कुञ्जगृहस्येति शेषः। उदस्य उपसार्य्य निराकृत्येति यावत्, वृतं लतादिभिः पिहितं हरिं कृष्णम्, अवलोक्य दृष्ट्वा चिरं बहुकालं यावद् जहास हसितवती। यद्यहं व्यक्तं तिष्टेयं तर्हि गोपिका मामचिरेणैव ज्ञास्यतीति तिमिरावृतस्थानमेवाऽऽश्रय इति मनसि निधाय कौतुकविधित्सया कुञ्जगृहमध्यासीनमपि कृष्णं स्वकीयवदनविधुदीधितिभिर्भासमानमालोक्य 'अहो अत्रापि मच्चक्षुरगोचरस्त्वं न शक्तः पलायितः स्थातुमि'ति काचिद् गोपाङ्गना प्रचुरं हसितवतीति भावः॥४४॥

**मात्तौ गौ चेत् शालिनी वेदलोकैः॥४५**

मात्ताविति। शालिनी छन्दसि मगणस्तगद्वयञ्च भवति। चतुर्भिः सप्तभिश्च यतिरित्यर्थः। अर्थात् चेद् यदि छन्दसः प्रतिपादं मात् मगणादनन्तरं तौ द्वौ तगणौ गौ द्वौ गगणौ च स्यातामित्यर्थः। षष्ठ-नवमौ विहाय सर्वे वर्णा गुरवः स्युरिति भावः। तथा वेदैश्चतुर्भिः लोकैः सप्तभिश्चाक्षरैर्यतिः स्यात् तदा शालिनी वृत्तं भवति। उदाहरणम्—

'अंहो हन्ति ज्ञानवृद्धिं विधत्ते धर्मं धत्ते काममर्थञ्च सूते।
मुक्तिं दत्ते सर्वदोपास्यमाना पुंसां श्रद्धाशालिनी-विष्णुभक्तिः॥

अंहो इति श्रद्धाशालिनी श्रद्धान्विता विश्वासयुक्तेति यावत् विष्णुभक्तिः विष्णुविषयकोऽनुरागविशेषः, सर्वदा सर्वस्मिन् काले उपास्यमाना क्रियमाणा सती पुंसां नराणाम्, अंहः पापं हन्ति नाशयति, ज्ञानवृद्धिं विधत्ते विवेकं वर्द्धयति, धर्मं पुण्यं धत्ते समुत्पादयति, तथा कामम् अभिलाषम्, अर्थं धनं सूते जनयति मुक्तिं मोक्षं च दत्ते ददातीत्यर्थः। विष्णौ क्रियमाणा भक्तिर्जनानां सर्वमेव साधयति इति सैव सर्वदा सर्वैः कर्त्तव्येति भावः ॥४५॥

**दोधकमिच्छति भ-त्रितयाद् गौ ॥४६**

दोधकमिति। भगणत्रयं गुरुद्वयञ्च यत्र स्यात्तद्दोधक-छन्दः। अर्थात् यस्य प्रति पादे भ-त्रितयाद् भगणत्रयात् परं गौ द्वौ गगणौ स्याताम्, तद्दोधकं तन्नामकं वृत्तं इच्छति सुधीजन इति शेषः। यद्वा, भ-त्रितयाद् गाविति दोधकमित्यस्य विधेय विशेषणम्। तथा च दोधकवृत्तं भत्रिक-गद्विकरूपमिच्छतीत्यर्थः। भत्रितयादिति पञ्चम्यान्तं पृथक् पदं वा, भत्रितयम्, अतति इति व्युत्पत्त्या क्विवन्तेन तेन गावित्यस्य कर्मधारयो वा बोध्यः। यतिरत्र पूर्ववदिति स एव ॥४६॥

**वातोर्मीयं गदिता म्भौ तगौ गः।**

वातोर्मीति। मगण-भगण-तगणा गुरु च यत्र स्युस्तद् वातोर्म्मि छन्दः। अर्थात् यस्याः प्रति पादं म् भश्च म्भौ मगण-भगणौ, तश्च गश्च तगौ, तगण-गगणौ ततश्चापि गः एको गगणः स्यादित्यर्थः। पञ्चम-षष्ठ-नवमाक्षराणि वर्जयित्वा सर्वाणि दीर्घाणि भवेयुरित्याशयः। सेयं वातोर्मी तदाख्यकं वृत्तम् गदिता कथिता

सुधीभिरिति शेषः। अत्र चतुर्भिः सप्तभिश्च यतिरिति हलायुधः। उदाहरणम्—

'ध्याता मूर्त्तिः क्षणमप्यच्युतस्य श्रेणी नाम्नां गदिता हेलयाऽपि।
संसारेऽस्मिन् दुरितं हन्ति पुंसां वातोर्मी पोतमिवाम्भोधिमध्ये॥'

ध्यातेति। अच्युतस्य कृष्णस्य मूर्त्ति स्वरूपं क्षणं क्षणकालमपि ध्याता चिन्तिता, तथा नाम्नां तदीयानामिति भावः। श्रेणी कृष्णनामावलीत्यर्थः। हेलयाऽपि अनिच्छयापि गदिता उच्चारिता सती, अम्भोधिमध्ये समुद्राभ्यन्तरे वातोर्मी वायुजनित-तरङ्गः, पोतमिव यानमिव अस्मिन् इह संसारे पुंसां जनानां दुरितम् अघं हन्ति नाशयतीत्यर्थः। यथा हि वायुना परिचालिता तरङ्गसंहतिः समुद्रान्तःपातिनं पोतं विनाशयति, तथा अनिच्छयापि क्रियमाणमच्युतस्वरूपचिन्तनं तन्नामकीर्त्तनञ्च कर्त्तॄणां कलुषराशि विनाशयत इति भावः॥४७॥

**मो गो नौ गो भ्रमरविलसिता ॥४८**

मो ग इति। यत्र मगण-गुरूनगणद्वयं गुरुश्च भवन्ति, तद् भ्रमरविलसिता छन्दः। अर्थात् यस्य पादे यथाक्रमं म एको मगणः, गः एको गगणः, तथा नौ द्वौ नगणौ गः गगणश्चैकः स्युरित्यर्थः। प्रथम-द्वितीय-तृतीय-चतुर्थैकादशाक्षराणि गुरूणि तदितराणि च लघूनि भवेयुरिति भावः। तद् भ्रमरविलसिता नाम वृत्तं भवति। पिङ्गलमते 'भ्रमरविलसिता म्भौ नलौ ग्' (पिङ्ग, ६।२२) इत्येवं गण-निर्द्देशः। अस्मिंस्तु 'मो गो नौ ग' इत्यन्यथाकृत इति परस्परविरोधी नाशङ्कनीयः, प्रकारभेदेऽपि द्वयोरेव तुल्यत्वात्। अत्रापि पूर्ववत् यतिरिति हलायुधः। उदाहरणम्—

'मुग्धे मानं परिहर न-चिरात् तारुण्यं ते सफलयतु हरिः।
फुल्ला वल्ली भ्रमरविलसिता भावे शोभां कलयति किमु ताम्॥'

मुग्धे इति। कृताभिमानं राधिकां प्रति कस्याश्चिद् दूत्या उक्तिरियम्। हे मुग्धे मूढ़े! न चिरात् अविलम्बं शीघ्रमिति यावत्, मानं अभिमानं कालविलम्बेन कृष्णसमागमजनितकोपमिति भावः। परिहर त्यज, हरिः कृष्णः, ते तव तारुण्यं यौवनं सफलयतु सफलं करोतु। फुल्ला विकसिता वल्ली लता भ्रमरविलसितानां अभावे तां तादृशीम् अतिमनोरमां शोभां सौन्दर्य्यं कलयति भजते किमु किम्? नैव भजत इत्यर्थः। यथा हि मधुकरविलासाभावाद्वल्लीनां न शोभा वैशिष्ट्यम्, कृष्णविरहात् त्वदीय यौवनस्यापि तथैवेति मानं परिहृत्य कृष्णमेव स्वं प्रत्यनुकूलं विधेहीति भावः ॥४८॥

**रात्परैर्नरलगैरथोद्धता ॥४९**

रात्परैरिति। रगण-नगण-रगण-लघुगुरुभी रथोद्धता छन्दः। अर्थात् या प्रतिपादे राद् रगणात् परैः परवर्त्तिभिः नश्च रश्च लश्च गश्च नरलगाः, तैस्तथोक्तैः गणैः, घटिता भवतीति शेषः। यत्र प्रथम-तृतीय-सप्तम-नवमैकादशाक्षराणि दीर्घाणि तदितराणि च ह्रस्वानि स्युरिति भावः। सा रथोद्धता तन्नामकं वृत्तं भवति। अत्र पादान्ते यतिरिति हलायुधः। उदाहरणम्—

'राधिका दधिविलोडनस्थिता कृष्णवेणु-निनदैरथोद्धता।
यामुनं तट-निकुञ्जमञ्जसा सा जगाम सलिलाहृतिच्छलात् ॥'

राधिकेति। राधिका दधिविलोड़ने दधिमन्थनविधौ स्थिता व्यापृता दधिविलोड़यन्तीत्यर्थः, आसीदिति शेषः। अथ कियत् क्षणादनन्तरं सा कृष्णस्य ये वेणुनिनदा वंशीध्वनयः, तैस्तच्छ्रवणेनेत्यर्थः। उद्धता अधीरा सती, सलिलाहृतिच्छलात् जलानयनव्याजात् अञ्जसा झटिति, तत्क्षणमेवेत्यर्थः। 'स्राग् झटित्यञ्जसाऽह्नाय द्राङ् मंक्षु सपदि द्रुते' इत्यमरः। यामुनं यमुनासम्बन्धितटनिकुञ्ज

तीरावस्थितलतादिपिहितोदर-क्रीड़ास्थानं जगाम गतवती ॥४९॥

**स्वागता रनभगैर्गुरुणा च ॥५०**

स्वागतेति। रगण-नगण-भगणा गुरु च यत्र स्युस्तत् स्वागता छन्दः। अर्थात् या रश्च नश्च भश्च गश्च रनभगाः, तैः, गुरुणा एकेन गुर्वक्षरेण च घटिता स्यादिति शेषः। यत्र प्रतिपादं प्रथम-तृतीय-सप्तमैकादशाक्षराणि विहाय सर्वाणि लघूनि स्युरित्याशयः। सा स्वागता तदाख्यकं वृत्तं भवेदित्यर्थः। अत्रापि पादान्ते यतिरिति हलायुधः। उदाहरणम्—

'यस्य चेतसि सदा मुरवैरी वल्लवीजनविलासविलोलः।
तस्य नूनममरालयभाजः स्वागतादरवरः सुरराजः॥'

यस्येति। वल्लवीजनेषु गोपवधूषु यो विलासः क्रीड़ा, तस्मात् विलोलश्चञ्चलः, तन्निमित्तमतिशयचपल इति भावः। मुरवैरी कृष्णः, यस्य भक्तजनस्य चेतसि चित्ते सदा निरन्तरम् अस्तीति शेषः। तस्य अमरालयभाजः, स्वर्गगतस्य सतः सुराणां देवानां राजा सुरराजो इन्द्रोऽपि नूनं ध्रुवं स्वागतेन 'स्वागतम्'? इत्यागमनविषयककुशलप्रश्नेन य आदरः, तं करोतीति तादृशो भवेदित्यर्थः। कृष्णभक्तः स्वर्गेऽपि समाद्रियत इति भावः ॥५०॥

**न-न-स-गुरुरचिता वृत्ता ॥५१**

ननसेति। यत्र नगणद्वयं सगणो गुरुद्वयञ्च स्यात्तद्वृत्ता छन्दः। अर्थात् या प्रतिचरणं नश्च नश्च सश्च गश्च गुरुश्च ननसगगुरवः, तैः गणैः रचिता घटिता, भवतीति शेषः। यत्र नवम-दशमैकादशवर्णा गुरवः शिष्टाश्च लघवो भवेयुरिति भावः। सा वृत्ता तन्नामकं वृत्तं स्यात्। अत्र चतुर्भिः सप्तभिश्च यतिरिति हलायुधः। पिङ्गलवृत्तरत्नाकरमते अस्या 'वृन्ते'ति नामान्तरम्।

अस्या उदाहरणम्—

'द्विजगुरुपरिभवकारी यो नरपतिरतिधनलुब्धात्मा ।
ध्रुवमिह निपतति पापोऽसौ फलमिव पवनहृतं वृन्तात् ॥'

(पिङ्ग, ६।२६) ॥५१॥

**न-न-र-ल-गुरुभिस्तु भद्रिका ॥५२**

ननेति। यत्र नगणद्वयं रगणो लघुगुरू च भवन्ति, तद् भद्रिका छन्दः। अर्थात् यस्याः प्रतिपादं नश्च नश्च रश्च लश्च गुरुश्च ननरल गुरवः, तैः गणैः रचितं भवतीति शेषः। यत्र सप्तम-नवमैकादशाक्षराणि गुरूणि शिष्टानि च लघूनि स्युरिति भावः। सा भद्रिका नाम वृत्तं भवति। ग्रन्थान्तरेऽस्याः 'सुभद्रिका' 'सुमद्रिके'ति च नाम्ना व्यपदेशः। अत्र पादान्ते यतिरिति केचित् ॥५२॥

**श्येन्युदीरिता रजौ रलौ गुरुः ॥५३**

श्येनीति। रगण-जगणौ रगण-लघुगुरवश्च यत्र स्युस्तत् ॰ो छन्दः। अर्थात् यस्याः प्रतिपादं रश्च जश्च रजौ रगण-जगणौ, रश्च लश्च रलौ रगण-लगणौ ततश्च गुरुरेको गगणश्च स्यादित्यर्थः। द्वितीय-चतुर्थ-षष्ठाष्टम-दशमाक्षराणि वर्जयित्वा सर्वाणि गुरूणि भवेयुरित्याशयः, स श्येनी नाम वृत्तं उदीरिता कथिता कविभिरिति शेषः। ग्रन्थान्तरेऽस्याः 'श्येनिका' 'सेनिके'ति च नामान्तरे। अत्र पादान्ते यतिरिति हलायुधः। अस्या पञ्चमाक्षरस्य लघुत्वे रथोद्धता, रथोद्धतायाश्च पञ्चमाक्षरस्य गुरुत्वे इयमिति कौशलम्। उदाहरणम्—

'यस्य कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यशेषलोकपावनी सदा।
जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम् ॥'

यस्येति। यस्य अच्युतस्य कीर्त्तिर्यशः, अशेषान् लोकान् पावनतीति अशेषलोकपावनी लोकत्रयपवित्रकारिणी, विश्वैः सर्वैः लोकत्रयेणेति यावत्, वन्द्योऽर्चनीयः विभ्रमो विलासो यस्याः सा तथोक्ताः, तथा इन्दुश्चन्द्रः, कुन्दं तदाख्यो माघमासोत्पन्न-पुष्पविशेषः, चन्दनञ्च, तद्वत् श्येनीशुभ्रा, 'श्येनः पक्षिणि पाण्डुरे' इति मेदिनी। अतएव जाह्नवीव गङ्गेव वर्त्तत इति शेषः। इन्दुकुन्दादिवदति धवला लोकवन्द्य विभ्रमा गङ्गा यथा जगत्त्रयं पवित्रयति यस्य कीर्त्तिरपि तथेति भावः। भावो भक्तिः, तेन गम्यं लब्धुं शक्यं तम् अच्युतं कृष्णं सदा निरन्तरं अहं सेवे ॥५३॥

**उपस्थितमिदं ज्सौ ताद् गकारौ ॥५४**

उपस्थितमिति। यत्र जगण-सगण-तगण-गुरुद्वयश्च भवन्ति, तदुपस्थित छन्दः। अर्थात् यस्य पादे आदौ ज् च सश्च ज्सौ जगण-सगणौ, ततस्तत् तगणात् परमिति शेषः, गकारौ द्वौ गगणौ वर्त्तेते। प्रथम-तृतीय-चतुर्थ-पञ्चम-नवमवर्णा लघवः शिष्टाश्च गुरवः स्युरिति भावः। इदं तत् उपस्थितं तन्नामकं वृत्तं भवेत्। यतिरत्र पूर्ववत् ॥५४॥

**पञ्चरसैः श्रीर्भतनगुगाश्चत ॥५५**

पञ्चेति। भगण-तगण-नगणा गुरुद्वयश्च यदि स्युः, पञ्चभिः षड्भिश्च यतिः स्यात्तदा श्रीछन्दः ॥५५॥

**शिखण्डितमिदं ज्सौ त्गौ गु षड्भिः ॥५६**

शिखण्डितमिति। जगण-सगणौ तगण-गुरुद्वये च यत्र स्यातां, तत् शिखण्डितच्छन्दः, षड्भिर्यतिः। इदमुपस्थितच्छन्दसो नामान्तरमिति ज्ञेयम् ॥५६॥

**स्यादनुकूला भ-त-न-गुगाश्चेत् ॥५७**

स्यादिति। भगण-तगण-नगणा गुरुयुगलञ्च यत्र स्यात् तदनुकूला छन्दः। अर्थात् चेद् यदि छन्दसः प्रतिचरणं भश्च तश्च नश्च गश्च गश्च भतनगगाः, आदौ भगण-तगण-नगणास्ततश्च द्वौ गगणौ स्युरित्यर्थः। द्वितीय-तृतीय-षष्ठ-सप्तमाष्टम-नवमाक्षराणि त्यक्त्वा सर्वाणि दीर्घानि भवेयुरित्यभिप्रायः। तदा तत् अनुकूला नाम वृत्तं स्याद्भवेत्। अस्याः 'श्रीरिति' नामान्तरं, पञ्चभिः षड्भिश्चाक्षरैः यतिः। तदुक्तं केदारभट्टेन—'वतणरसैः स्याद् भतनगगैः श्रीः' (वृत्तरत्नाकरः ३० अ० ८ ल०) उदाहरणम्—

'पल्लववेषा मुररिपुमूर्त्तिर्गोपमृगाक्षीकृतरतिपूर्त्तिः।
वाञ्छितसिद्धै प्रणतिपरस्य स्यादनुकूला जगति न कस्य ॥'

वल्लवेति। वल्लवस्य गोपस्य वेष इव वेषो यस्याः सा वल्लववेषा, 'वल्लव' सूपकारे स्यद् भीमसेने च गोदुहि' इति विश्वः। गोपमृगाक्षीभिर्गोपाङ्गनाभिर्हेतुभूतानामित्यर्थः, कृता विहिता रतेरङ्गरागस्य रमणस्य वा पूर्त्तिः पूरणम्, अतिशय इति यावत्। यया सा तथोक्ता मुररिपोः कृष्णस्य मूर्त्तिः स्वरूपम्, जगति अस्मिन् संसारे प्रणतिपरस्य प्रणतस्य कृत भक्तिकस्येत्यर्थः, कस्य जनस्य वाञ्छितसिद्धैः मनोरथसाधनाय अनुकूला हितकारिणी न स्यात् न भवेत् ? अपितु सर्वेषामेव स्यादित्यर्थः। हरिः प्रणतिपराणामेव स्वभक्तानां मनोरथं सफलयतीति भावः। इयं 'मौक्तिकमाले'ति केचित् ॥५७॥

**स्यान् 'मोटनकं' त-ज-गाश्च लगौ ॥५८**

स्यान्मोटेति। यत्र तगणो जगणद्वयं लघुगुरू च भवन्ति, तन्मोटकं छन्दः। अर्थात् यस्य प्रतिपादं तश्च जश्च जश्च तजजाः

एकस्तगणो द्वौ जगणौ च, तथा लश्च गश्च लगौ लगण-गगणौ च स्यातामित्यर्थः । प्रथम-द्वितीय-पञ्चमाष्टमैकादशाक्षराणि विना सर्वाणि लघूनि भवेयुरिति भावः। तत् नाम वृत्तं स्यात्। उदाहरणम्—

'रङ्गे खलु मल्लकलाकुशलश्चाणूरमहाभटमोटनकम् ।

यः केलि लवेन चकार स मे संसाररिपुं परिमोटयतु ॥'

रङ्गे इति। रङ्गे रङ्गभूमौ युद्धक्षेत्रे इति यावत्, मल्लस्य बाहुयोद्धुः कलया विद्यया बाहुयुद्धमित्यर्थः, तत्र कुशलो निपुणः यः कृष्णः केलिलवेन क्रीड़ालेशेन, अनायासेनेति भावः, चाणूर-श्चाणूराख्यः कश्चिदसुरः। महांश्चासौ भटश्चेति महाभटः महायोद्धा, चाणूरश्चासौ महाभटश्चेति चाणूरमहाभटः, तस्य मोटनकं विनाशं चकार कृतवान् स कृष्णः, मे मम संसार एव रिपुः शत्रुः, तं पुनः पुनः शरीर-परिग्रहरूपं संसारशत्रुमित्यर्थः, परिमोटयतु नाशयतु। पुनर्यथा मे शरीरपरिग्रहो न स्यात् कृष्णस्तथा विदधातिति भावः ॥५८॥

**सान्द्रपदं भतौ नगु-लघुभिश्च ॥५९**

सान्द्रेति। यत्र भगण-तगण-नगणा गुरुलघू च भवन्ति, तत् सान्द्रपदच्छन्दः। अर्थात् यस्य प्रतिचरणं भश्च तश्च नश्च गश्च लश्च भतनगलाः, तैः गणै, घटितं भवतीति शेषः। यत्र प्रथम-तुरीय-पञ्चम-दशमान् विहाय सर्वे वर्णा लघवः स्युरिति भावः। तत् सान्द्रपदं नाम वृत्तं स्यात् ॥५९॥ छन्दो मञ्जर्य्यामतिरिक्तानि छन्दांसि दृश्यन्ते।

**'कुपुरुषजनिता ननौ र्गौ गः'।**

यस्य प्रतिपादं नश्च नश्च ननौ द्वौ नगणौ र् च गश्च र्गौ

रगणौ गगणौ गः एको गगणश्च स्युरित्यर्थः। सप्तम-नवम-दशममैकादशाक्षराणि गुरूणि तदितराणि च लघूनि भवेयुरिति भावः। तत् कुपुरुषजनिता नाम वृत्तं भवति।

**'अनवसिता' न्यौ भ्गौ गुरुरन्ते।**

अनवसितेति। यस्य पादे न् च यश्च न्यौ नगण-यगणौ भ् च गश्च भ्गौ भगण-गगणौ अन्ते अवसाने गुरुरेको गगणश्च स्युरित्यर्थः। पञ्चम-षष्ठ-सप्तम-दशमैकादशाक्षराणि दीर्घाणि शिष्टानि च लघूनि भवेयुरित्यभिप्रायः। तत् अनवसिता नाम वृत्तं भवति।

**'विध्वङ्कमाला' भवेत्तौ तगौ गः।**

विध्वङ्कमालेति। यस्य पादे तश्च तश्च तौ द्वौ तगणौ तश्च गश्च तगौ तगण-गगणौ तथा गः एको गगणश्च भवेदित्यर्थः। तृतीय-षष्ठ-नवमान् विना सर्वे वर्णा गुरवः स्युरिति भावः। तत् विध्वङ्कमाला नाम वृत्तं भवति।

**न-र-र-लैर्गुरा'विन्दिरा' मता।**

नररेति। नश्च रश्च रश्च लश्च नररलाः, तैः सहेति शेषः। गुरौ एकस्मिन् गगणे सतीत्यर्थः। प्रतिपादं तुरीय-षष्ठ-सप्तम-नवमैकादशाक्षरेषु दीर्घेषु शिष्टेषु च लघुषु सत्स्विति भावः। इन्दिरा तन्नामकं वृत्तं मता कथिता कविभिरिति शेषः। उदाहरणम्—'जयति तेऽधिकं जन्मना व्रजः

श्रयत इन्दिरा शश्वदत्र हि।

दयित दृश्यतां दिक्षु तावका

स्त्वयि धृतासवस्त्वां विचिन्वते ॥'

(भा० १०।२१।१)

अस्यार्थ—पूर्वस्मिन्नध्याये गोपीजनाः कृष्णागमनकाङ्क्षिणः कृष्णं जगुरित्युक्तम्, तत्स्वरूपमाह—जयतीति। हे दयित प्रिय! ते तव जन्मना प्रादुर्भावेन व्रजः अधिकं यथा स्यात्तथा जयति सर्वोत्कर्षेण वर्त्तत इत्यर्थः। तथा हि—यस्मात् त्वमत्र जातस्तस्मात् इन्दिरा सर्वसम्पदाधिष्ठात्री लक्ष्मीरत्र अस्मिन् व्रजे शश्वत् निरन्तरं श्रयते, श्रीरिति स्वकीय नाम्नः सार्थक्याय व्रजमेवालङ्कृत्य वर्त्तत इत्याशयः। एवं कृतार्थतामुपगतेऽपि अत्र व्रजे साधकास्त्वदीय जना गोपीजना इत्यर्थः। त्वयि त्वदर्थमेव धृताः कथञ्चिद् गृहीता आसवः प्राणाः यस्ते तथोक्ताः सन्तः, त्वं दिक्षु सर्वेषु प्रदेशेषु विचिन्वते 'हे प्रिय क्वासि क्वासि' इति मृगयन्ते। अतस्तया दृश्यतां प्रत्यक्षीभूयताम्। दृशिरत्राकर्म्मकः। यद्वा, अस्माभिर्भवान् दृश्यतां प्रत्यक्षी क्रियतामित्यर्थः। यद्वा, त्वया एतत् सर्वं दृश्यताम्, वाक्यार्थः कर्म ॥५९॥

## (१२)

**द्वादशाक्षरा जगती—यथा,**

**चन्द्रवर्त्म निगदन्ति र-न-भ-सैः। ६०**

द्वादशाक्षरेति—चन्द्रेति। रगण-नगण-भगण-सगणैश्चन्द्रवर्त्म छन्दः। अर्थात् यस्य प्रतिपादं रश्च नश्च भश्च सश्च रनभसाः, तै स्तयोक्तैर्गणैः घटितं भवतीति शेषः, यत्र प्रथम-तृतीय-सप्तम-द्वादशाक्षराणि विहाय सर्वाणि लघूनि भवेयुरिति भवतीति भावः। तत् चन्द्रवर्त्म नाम वृत्तं निगदन्ति कथयन्ति कवय इति शेषः। अत्र चतुर्भिरष्टभिश्च यतिरिति केचित्। उदाहरणम्—

'चन्द्रवर्त्म-पिहितं धनतिमिरै
　　राजवर्त्म-रहितं जनगमनैः।

इष्टवर्त्म तदलङ्कुरु सरसे
कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥'

राधिकां प्रति कस्याश्चिद् दूत्या उक्तिरियम्। हे सरसे रसिके, 'यत्तयोर्नित्यसम्बन्धः' परत्र तच्छब्दग्रहणाद् अत्र यदित्यध्याहृत्ये व्याख्येयम्। यद् यस्मात् चन्द्रस्य वर्त्म पन्थाः आकाश इति यावत्, घनतिमिरैः मेघजनितान्धकारैः, गाढान्धकारैर्वा पिहितं आवृतम्, तथा राजवर्त्म राजपथोऽपि जनानां पथिकजनानां गमनैश्चलाचलैः रहितं शून्यमित्यर्थः। तत् तस्मात् इष्टञ्च तद् वर्त्म चेति इष्ट वर्त्म सङ्केतस्थानस्य अभिलषितमार्गम्, यद्वा इष्टस्य दयितस्य वर्त्म मार्गं येन वर्त्मना दयितः सङ्केतस्थानं यातस्तदित्यर्थः। अलङ्कुरु स्वगत्या शोभय त्वमिति शेषः। नभो मण्डलस्य मेघावृतत्वात् पथिकाः सम्प्रति राजमार्गमपि पर्य्यटयन्नित्ययमेव ते अभिसारस्य समुचितः कालः समायात इति अभीष्ट-वर्त्मना सङ्केतस्थानं व्रजेति भावः। ननु दयितस्तव नाऽऽगत इति चेदित्याशङ्कयाऽऽह—कुञ्जेति। हरिः कृष्णः, तव कुञ्जवर्त्मनि कुञ्जगमनमार्गे कुतुकी उत्सुकः सन् आस्ते इति शेषः। कृष्णस्तद् गमनोत्कण्ठितः कुञ्जमार्गमालोकयन् त्वामेव प्रतीक्षते—इति भावः ॥६०॥

**वदन्ति वंशस्थविलं जतौ जरौ ॥६१**

**(वंशस्तनितमित्यन्ये)**

वदन्तीति। यत्र जगण-तगणौ जगण-रगणौ च स्यातां तद् वंशस्थविलच्छन्दः। अर्थात् यस्य पादं यथाक्रमं जश्च तश्च जतौ जगण-तगणौ जश्च रश्च जरौ जगण-रगणौ च स्यातामित्यर्थः। द्वितीय-चतुर्थ-पञ्चमाष्टम-दशम-द्वादशाक्षराणि दीर्घाणि अन्यानि च लघूनि भवेयुरिति भावः। तद् वंशस्थविलं नाम वृत्तं भवेत्।

वृत्तमिदं 'वंशस्तनितं' 'वंशस्था' 'वंशस्थमि'ति च नाम्ना व्यपदिश्यते। अत्र पादान्ते यतिरिति हलायुधः। उदाहरणम्—

'विलास-वंशस्थविलं मुखानिलैः प्रपूर्य्य यः पञ्चमरागमुद्गीरन्।
व्रजाङ्गनानामपि गानशालिनां जहार मानं स हरिः पुनातु नः॥'

विलासेति। यः मुखानिलैर्वदनमारुतैः विलासस्य क्रीड़ाया यो वंशः वंशीत्यर्थः, अत्र तिष्ठतीति तथोक्तं विलं छिद्रं प्रपूर्य पूरयित्वा पञ्चमरागं पञ्चमाख्यं रागं उद्गीरन् उच्चारयन् गायन्निति यावत्, व्रजाङ्गनानां व्रजवधूनां गानमजानतीनामित्यर्थः, गान-शालिनां निरन्तरं गायतां नारदादीनाञ्च अपि अत्र चार्थः। मानम् अङ्गना-पक्षे प्रणयजनितं कोपम्, नारदादि-पक्षे च गायकत्वाहङ्कारं जहार हृतवान्। यस्य वंशीध्वनिमाकर्ण्य व्रजाङ्गनाः प्रणयकोपं नारदादयो गायकाश्च गायकत्वाभिमानं पर्य्यत्यजन्निति भावः। स हरिः कृष्णः नः अस्मान् पुनातु पवित्रयतु॥६१॥

**तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ॥६२**

तच्चेति। तगणौ जगणा-रगणौ च यत्र स्यातान्तदिन्द्रवंशा छन्दः। अर्थात् प्रथमाक्षरे गुरौ दीर्घे सतीत्यर्थः। अत्र भाषित-पुंस्कत्वाद् वैकल्पिको नुमभावः। प्रतिपादं क्रमशस्तगण-तगण-जगण-रगणेषु सत्स्विति भावः। तत् प्रागुक्तं वंशस्थविलमेव इन्द्रवंशा नाम वृत्तं भवति। वृत्तरत्नाकरेऽपि 'स्यादिन्द्रवंशा ततजै रसं युतैः' (३।४७) इत्यस्या लक्षणम्। एवञ्च वंशस्थविले यथाक्रमं जगण-तगण-जगण-रगणाः, अस्मिंस्तु तगण-तगण-जगण-रगणा इत्यनयोर्भेदः। अत्रापि पादान्ते यतिरिति हलायुधः। उदाहरणम्—

'दैत्येन्द्रवंशाग्निरुदीर्ण-दीधितिः
पीताम्बरोऽसौ जगतां तमोऽपहः।

यस्मिन् ममज्जुः शलभा इव स्वयं
ते कंस-चाणूरमुखामखद्विषः ॥'

दैत्येन्द्रेति। उदीर्णा उद्गता दीधितिर्यस्य सः, उद्गत-किरण इत्यर्थः। जगतां भुवनत्रयस्य तमोऽन्धकारम्, अर्था पापश्चापहन्तीति तमोऽपहः, पापान्धकारनाशकः, असौ पीतमम्ब यस्य स पीताम्बरो हरिः, दैत्येन्द्राणाम् असुरश्रेष्ठानां यो वंश कुलम्, स एव वंशो वेणुः, तत्र अग्निः विनाशकत्वात् अनलस्वरू इत्यर्थः, जात इति शेषः। यस्मिन् अनलस्वरूपे पीताम्बरे ते प्रसिद्धाः कंसचाणूरौ मुखौ मुख्यो येषु ते कंसचाणूरादयः, कंसचाणू प्रधानाः। यद्वा, कंसचाणूरौ मुखौ आदी येषां ते तथोक्ता कंसचाणुरादयः, मखद्विषः, यज्ञविघातका असुरा इत्यर्थः। शलभा पतङ्गा इव स्वयं ममज्जुः पेतुः। अग्निर्यथा पतङ्गान् दहन्ति अस पीताम्बरोऽपि तथा कंसादीन् विनाशितवानिति भावः ॥६२॥

**रसै र्जस-जसा जलोद्धतगतिः ॥६३**

रसैरिति। यत्र जगण-सगणौ द्विः स्याताम्, यतिश्च षड्भिः, तज् जलोद्धतगतिच्छन्दः। अर्थात् जसौ जस-युतौ 'जलोद्धतगतिः' ज स ज स, यस्य प्रतिपादं जश्च सश्च जसौ जगण-सगणौ जसयुतौ जगण-सगणयुक्तौ भवत इति शेषः। यथाक्रम जगण-सगण जगण-सगणाः स्युरिति भाव.। तद् जलोद्धतगतिर्ना वृत्तं भवे.त्। अत्र षड्भिरक्षरैर्यतिरिति हलायुधः। उदाहरणम्—

'यदीयहलतो विलोक्य विपदं
कलिन्दतनया जलोद्धतगतिः।
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम् ॥'

यदीयेति । जलैः उद्धता अस्थिरा गतिर्यस्याः सा जलोद्धगतिः, तरङ्गप्रचुरत्वात् चञ्चलं प्रवहतीत्यर्थः। कलिन्दस्य सूर्य्यस्य तनया यमुना यदीय हलतः यस्य हलात् विपदं विपत्तिं स्वस्य इति शेषः। विलोक्य दृष्ट्वा सहसा झटिति विलासविपिनं हलधरस्य क्रीड़ाकाननं विवेश प्रविष्टवती, तमनुकूलयितुमिति भावः। स हलमप्यास्तीति हली हलधरः बलराम इति यावत्, जगतां त्रिभुवनस्य मङ्गलं करोतु विदधातु ॥६३॥

**इह तोटकमम्बुधि सैर्गदितम् ॥६४**

इहेति। चतुर्भिः सगणैस्तोटक छन्दः। अर्थात् वद तोटकमब्धि-सकारयुतम्। स, स, स, स, यस्य प्रतिपादं अब्धि-सकारयुतं चतुर्भिः सगणैरन्वितं भवतीत्यर्थः। यत्र चत्वारः सगणाः स्युरिति भावः, तद् वृत्तं तोटकं वद तोटकेति नाम्ना व्यवहारः। अत्रापि पूर्ववद् यतिरिति स एव। उदाहरणम्—

'यमुनातटमच्युतकेलिकला
लसदङ्घ्रिसरोरुह-सङ्गरुचिम्।
मुदितोऽटकलेरपनेतुमघं
यदि चेच्छसि जन्म नितं सफलम्॥'

हे जन! यदि चेत्, कलेः कलिकालस्य अघं पापं कलिकालसम्बन्धिपापमित्यर्थः, अपनेतुम् अपसारयितुं तथा निजं जन्म मानवरूपेण स्वस्य उपस्थितिश्च सफलं फलवत्, कर्त्तुमिति शेषः। इच्छसि अभिलसति त्वमिति शेषः। तदा मुदित हृष्टः सन् अच्युतस्य कृष्णस्य केलिकलया नृत्यादिविद्यया लसत् शोभमानं तद् अङ्घ्रिसरोरुहं चरणकमलं तस्य सङ्गेन सम्पर्केन रुचिः शोभा यस्य तम्, तादृशं यमुनातटं कालिन्दी तीरम्, अट व्रज। यमुनातटे निरन्तरं कृष्णः प्रतिवसतीति तत्र गतस्य कृष्णदर्शनात् पापक्षयस्तेन

न जन्म साफल्यमित्युभयं सम्पद्यते इति भावः ॥६४॥

**द्रुतविलम्बितमाह नभौ भरौ ॥६५**

द्रुतेति। नगण-भगणौ भगण-रगणौ च यदि स्यातां तर्हि द्रुतविलम्बित छन्दः। अर्थात् यस्य पादे नश्च भश्च नभौ नगण-भगणौ भश्च रश्च भरौ भगण-रगणौ स्यातामित्यर्थः। चतुर्थ-सप्तम-दशम-द्वादशाक्षराणि त्यक्त्वा सर्वाणि लघूणि स्युरित्यर्थः तद् द्रुतविलम्बितं नाम वृत्तं आह ब्रवीति सुधीजन इति शेषः यतिरत्र पूर्ववत्। उदाहरणम्—

**'तरणिजापुलिने नववल्लवी**
**परिषदा सह केलिकुतूहलात्।**
**द्रुतविलम्बित चारुविहारिणं**
**हरिमहं हृदयेन सदा वहे ॥**

**तरणिजेति। तरणिजा कालिन्दी, तस्याः पुलिने तोयोत्थित तत् पुलिनं, तोयोत्थितप्रदेशे नववल्लवीपरिषदा नवानां तरुणीनां वल्लवीनां गोपवधूनां या परिषद् गोष्ठी तस्य सह केलिकुतूहलात् क्रीड़ाकौतुकवशात् द्रुतविलम्बित चारुविहारिणं** द्रुतेन शीघ्रेण विलम्बितेन विलम्बेन च चारु मनोज्ञं यथा स्यात्तथा विहारिणं विहारं कुर्वन्तं हरिं कृष्णम् अहं सदा सर्वस्मिन् काले मनसा हृदयेन वहे धारयामि। सर्वदा तमेव मनसि भावया मित्यर्थः ॥६५॥

**वसुयुगविरति नौ म्यौ पुटोऽयम् ॥६६ न न म य।**

वसुयुगेति। नगणौ मगण-यगणौ च यदि स्यातामष्टमभि-श्चतुर्भिश्च यति स्तदा पुटच्छन्दः। अर्थात् यस्य पादे नौ द्वौ नगणौ म् च यश्च म्यौ मगण-यगणौ च स्यातामित्यर्थः। सप्तमाष्टम-नवमैकादशद्वादशवर्णान् ऋते सर्वे लघवो भवेयुरित्याशयः।

वसवश्चैते युगानि चेति वसुयुगानि तैरष्टाभिश्चतुर्भिश्चाक्षरैरित्यर्थः। विरतिर्विरामो यत्र तादृशः अयं स पुटः पुटनामकं वृत्तं भवेत्। अस्योदाहरणम्—(पिङ्ग, ६ अ० ३३ सू०)

'न विचलति कथञ्चिन्नयाय मार्गाद्
　　वसुनि शिथिलमुष्टिः पार्थिवो यः।
अमृतपुट इवासौ पुण्यकर्म्मा
　　भवति जगति सेव्यः सर्वलोकैः॥'६६॥

**चतुर्जगणम्वद मौक्तिकदाम ॥६७**

चतुरिति। चतुर्भिर्जगणैर्मौक्तिकदाम छन्दः। अर्थात् 'समस्तजमीरय मौक्तिकदाम' ज ज ज ज। यस्य प्रति चरणसमस्तश्चत्वारो जा जगणा यत्र तत् समस्तजं चतुर्भिर्जगणैर्घटितमित्यर्थः, यत्र प्रतिपादं द्वितीय-पञ्चमाष्टमैकादशाक्षराणि दीर्घाणि शिष्टानि च ह्रस्वानि स्युरित्याशयः। तत् मौक्तिकदाम तन्नामकं वृत्तं ईरय कथय। पादान्तगाऽत्र यतिरिति केचित्॥६७॥

**कीर्त्तितैषा चतूरेफिका 'स्रग्विणी' ॥६८**

कीर्त्तितेति। चतुर्भिरगणैः स्रग्विणी छन्दः। अर्थात् या प्रतिपादे चतूरेफिका चत्वारो रेफा रगणा यत्र तादृशी भवतीति शेषः, यत्र प्रतिपादं चत्वारो रगणा वर्त्तेरन्नित्याशयः। एषा सा स्रग्विणी नाम वृत्तं कीर्त्तिता अभिहिता पण्डितैरिति शेषः। यतिरत्र पूर्ववत्। उदाहरणम्—

'इन्द्रनीलोपलेनेव या निर्मिता
　　शातकुम्भद्रवालङ्कृता शोभते।
नव्यमेघच्छविः पीतवासा हरे-
　　र्मूर्त्तिरास्तां जयायोरसि स्रग्विणी॥

इन्द्रेति। या मूर्त्तिः, नव्यमेघस्य छविरिव छविर्यस्याः स नव्यमेघच्छविर्नवीनजलधरकान्तिः, तथा पीतं वासो यस्याः स पीतवासाः पीताम्बरा, अतएव इन्द्रनीलोपलेन नीलकान्तमणिन निर्मित्ता रचिता शातकुम्भद्रवेण सौवर्ण-रसेन अलङ्कृता मण्डित च शोभते, उरसि वक्षसि स्रग्विणी वनमालोपेता हरेः कृष्णस या मूर्त्तिस्तनुः जयाय आस्तां सर्वोत्कर्षाय भवतु। सर्वविषयव मुत्कर्षं साधयत्वित्यर्थः ॥६८॥

**वाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥६९ म म य य।**

वाणेति। यत्र मगणौ यगणौ च स्यातां पञ्चभिः सप्तभिश्च यतिरपि भवेत्तद् वैश्वदेवी छन्दः अर्थात् यस्य प्रतिपादं ममौ द्वौ मगणौ यौ द्वौ यगणौ च स्याताम्, सप्तमं दशमञ्चाक्षरं विहायापराणि गुरूणि भवेयुरिति भावः। तत् बाणाश्च अश्वाश्च बाणाश्वाः, तैः पञ्चभिः सप्तभिश्चाक्षरैरित्यर्थः। छिन्ना कृत्या यतिमतीति यावत्, वैश्वदेवी तन्नामकं वृत्तं भवेत्। उदाहरणम्—

'अर्चामन्येषां त्वं विहायामराणा-
मद्वैतेनैकं कृष्णमभ्यर्च्च भक्त्या।
तत्राशेषात्मन्यर्चिते भाविनी ते
भ्रातः सम्पन्नाराधना वैश्वदेवी ॥'

अर्चामिति। एकं कृष्णभक्तं प्रत्यपरस्य कृष्णभक्तस्योक्ति रियमू। हे भ्रातः, त्वम्, अन्येषां अर्थात् विष्णुव्यतिरिक्तानाम् अमराणां देवानाम्, अर्चां अर्चनां विहाय परित्यज्य, विष्णवन्य- देवतामपूजयित्वेति भावः। भक्त्या सानुरागम्, अद्वैतेन 'एकमेवाद्वितीयम्' इत्यादि श्रुतिबोधितेन एकत्वज्ञानेनेत्यर्थः। एकं केवलमद्वितीयमिति यावत्, कृष्णम् अभ्यर्च विष्णुं पूजय। सत्स्वपरेषु देवेषु किमेकत्वबुद्ध्या विष्णोपासनायेत्याशङ्कयाऽऽह—

तत्रेति। अशेषं समग्रम्, आत्मा स्वरूपं यस्य तस्मिन् अशेषात्मनि विश्वरूपे, तत्र कृष्णे अर्चिते आराधिते सति ते तव, विश्वे च ते देवाश्चेति विश्वदेवाः, तेषामियं विश्वदेव+ण्ण+ईप् वैश्वदेवी, अशेषदेवसम्बन्धिनी, सर्वतोमुखीति भावः। आराधना अर्चना सम्पन्ना सिद्धा भाविनी भविष्यतीत्यर्थः। तदाराधनया सर्वे देवा आराधिता भविष्यतीति भावः ॥६९॥

**प्रमिताक्षरा स ज स सैर्गदिता ॥७०**

प्रमितेति। यत्र सगण-जगणौ सगणद्वयञ्च भवन्ति, तत् प्रमिताक्षरा छन्दः। अर्थात् या प्रतिपादं सश्च गश्च, सश्च सश्च सजससाः तैः यथाक्रमवस्थितैः स-ज-स-सैर्गणैरित्यर्थः, घटिता भवतीति शेषः। यत्र प्रतिपादं तृतीय-पञ्चम-नवम-द्वादशाक्षराणि दीर्घाणि शिष्टाणि च ह्रस्वानि भवेयुरित्याशयः। सा प्रमिताक्षरा नाम वृत्तं कथिता अभिहिता कविभिरिति शेषः। अत्र पादान्ते यतिरिति हलायुधः। उदाहरणम्—

'अमृतस्य शीकरमिवोद्गीरती
रद-मौक्तिकांशुलहरीच्छुरिता।
प्रमिताक्षरा मुररिपोर्भणिति-
र्व्रजसुभ्रुवामभिजहार मनः॥'

अमृतस्येति। अमृतस्य सुधायाः शीकरम् अर्थात् बिन्दुम्, उद्गिरती क्षरन्ती इव, अत्यन्त-मधुरेत्यर्थः। रदा दन्ता एव मौक्तिकानि मुक्ताफलानि, तेषां अंशुलहरीभिः किरणसमूहैश्छुरिता व्याप्ता, तथा प्रमितानि परिमितानि अल्पानीत्यर्थः। अक्षराणि वर्णा यस्यां सा प्रमिताक्षरा अल्पाक्षरवती, सूत्रभूता निगूढ़ा चेत्याशयः। मुररिपोः कृष्णस्य भणितिरुक्तिः, व्रजसुभ्रुवां

व्रजवधूनां मनो जहार चित्तमाचकर्ष। व्रजाङ्गनाः प्रागुक्तविशेषण-विशिष्टां कृष्णस्य वाचमाकर्ण्य तत्रैव मनोऽर्पितवत्य इति भावः। प्रसिद्धमुदाहरणम्—'प्रतिकूलतामुपगते हि विधौ

विफलत्वमेति बहुसाधनता।

अवलम्बनाय दिनभर्त्तुरभू-

न्न पतिष्यतः करसहस्रमपि॥'

(माघे ९।६)

विधौ देवे चन्द्रे च 'विधुः सुधांशुः शुभ्रांशुः' भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। प्रतिकूलतां प्रतिकूलभावं विपरीत-दिग्वर्त्तिताञ्च, उपगते प्राप्ते सति, एकत्र वैमुख्येन अन्यत्र च स्वोदयेनेति भावः। बहुसाधनता बहूनि साधनानि उपाया यस्य तस्य भावस्तत्ता तथोक्ता, विफलत्वम् अकिञ्चित्सहायकत्वम्, एति प्राप्नोति। तथाहि—पतिष्यतः पतनोन्मुखस्य, उन्नतपदाद् भविष्यद् भ्रंशस्य इति यावत्। सूर्य्यपक्षे, उदयास्तं गमिष्यत इत्यर्थः। दिनभर्त्तुः दिवाकरस्य तत्त्वेनाध्यस्तस्य कस्यचन जनस्य च अवलम्बनाय आश्रयाय करसहस्रं कराणां किरणानां हस्तानां च सहस्रम्। 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' इति मेदिनी। अपि न उपायो नाभवत्। दैवे विरूपे नार्हन्ति सहस्रमपि साधनानि किञ्चित् साधुयितुमिति भावः॥७०॥

**न न र र घटिता तु मन्दाकिनी ॥७१**

ननरेति। नगण-द्वयेन रगण-द्वयेन च मन्दाकिनी छन्दः। अर्थात् या प्रतिपादं नश्च नश्च ननौ द्वौ नगणौ, रश्च रश्च ररौ द्वौ रगणौ, तैः, यथाक्रममवस्थितैः ननररैर्गणैरित्यर्थः। घटिता घटिता निबद्धा, भवतीति शेषः। यत्र सप्तम-नवम-दशम-द्वादशा-क्षराणि वर्जयित्वा शिष्टानि लघूनि भवेयुरिति भावः। सा

मन्दाकिनी नाम वृत्तं भवति। पिङ्गलमते अस्याश्चञ्चलाक्षिकेति संज्ञान्तरम्। वृत्तिकारेण च एतदुदाहरणीकृत तृतीयश्लोकमेव तस्या उदाहरणत्वेनोपात्तम्। केदारभट्टस्त्वस्याः 'प्रमुदितवदना' इति नामान्तरमाचख्यौ। मल्लीनाथः पुनरुदाहरणीकृत द्वितीय-तृतीय-श्लोक-व्याख्याने यथाक्रमं 'प्रमुदितवदना भवेन्नौ च रौ' स्वरशर-विरतिर्ननौ रौ प्रभा' इति नामद्वयमभिदधौ। तत्र च गणसाम्येऽपि यथा लक्षणं यतेः सत्तासत्ताभ्यामुभयोर्भेदः कथञ्चिदुन्नेयः। उदाहरणम्—'बलिदमनविधौ बभौ सङ्गता

पदजलरुहि यस्य मन्दाकिनी।

सुरनिहितसिताम्बुजस्रङ्निभा

हरतु जगदघं स पीताम्बरः॥'

बलिदमनेति। बलेर्बलिराजस्य यो दमनविधिः शासनकर्म तस्मिन् विषये, यस्य पदजलरुहि चरणसरोजे गगनस्थे इत्याशयः, सङ्गता मिलिता मन्दाकिनी गङ्गा, सुरनिहितसिताम्बुजस्रङ्निभा सुरैः देवैः निहित स्थापिता दत्तेति भवेत्, या सिताम्बुजस्रक् श्वेतपद्ममाल्यं तन्निभा तत्सदृशी, देवार्पितश्वेतकमलमाला-सदृशीत्यर्थः, बभौ रेजे, स पीताम्बरः कृष्णः जगदघं जगतां पापं हरतु।७१

'सहशरधि निजं तथा कार्मुकं

वपुरतनु तथैव वर्म्मितम्।

निहितमपि तथैव पश्यन्नसिं

वृषभगतिरुपाययौ विस्मयम्॥'

(भारवौ १८।१६)

सहेत्यादि वृषभस्य गतिरिव गतिर्यस्य, तादृशः सः अर्जुनः तस्मिन् समये शरधिभ्यां तूणीराभ्यां सह वर्त्तत इति सहशरधि, सनिषङ्गमित्यर्थः। निजं स्वकीयं कार्मुकं धनुः, गाण्डीवमिति

यावत्, तथैव पूर्ववदेव संवर्मितं सम्यगावृतम्, अतनु महत् निज वपुस्तथैव निहितं पूर्ववदेव स्थापितम्, तथा असिमपि खड्गञ्च तथैव पूर्ववदेव पश्यन् आलोकयन् विस्मयम् उपाययौ प्राप्तवान् ॥७१॥

**न य सहितौ न्यौ कुसुमविचित्रा ॥७२**

नयेति। यत्र नश्च यश्च नयौ नगण-यगणौ, ताभ्यां सहितौ युक्तौ न् च यश्च न्यौ नगण-यगणौ भवत इति शेषः, पञ्चम-षष्ठैकादश-द्वादशाक्षराणि विहाय शिष्टानि लघूनि भवेयुरित्याशयः। तत् कुसुमविचित्रा नाम वृत्तं भवेत्। अत्र षड्भिः षड्भिः यतिरिति हलायुधः। उदाहरणम्—

'विपिनविहारे कुसुमविचित्रा
कुतुकित-गोपीमहिता चरित्रा।
मुररिपुमूर्त्तिर्मुखरितवंशा
चिरमवतात् वस्तरलवतंसा॥'

विपिनेति। विपिनविहारे वनविहारे वनविहरणसमये इत्यर्थः। कुसुमविचित्रा पुष्पभूषिता, तथा कुतुकं जातं यासां ताः कुतुकिताः सञ्जातकौतूहलाः। तारकादित्वादितच् प्रत्ययः। गोप्यः गोपाङ्गनाः, ताभिः सहितं स्तुतिमुखेन प्रशंसितं चरित्रं यस्याः, सा तथोक्ता। किञ्च, मुखरितः शब्दितः वंशः वेणुर्यया सा मुखरित-वंशाः, क्रियमाणवंशीरवेत्यर्थः, तरलश्चञ्चलः वतंसः कर्णभूषणं यस्याः सा तादृशी मुररिपोः कृष्णस्य मूर्त्तिः तनुः वः युष्मान् अवताद् रक्षतु ॥७२॥

**इह वद तामरसं न ज जा यः ॥७३**

इहेति। यत्र नगणो जगणद्वयं यगणश्च स्यात्तत्तामरस छन्दः। अर्थात् यस्य प्रतिपादं नश्चजश्च जश्च नजजाः एको नगणः

द्वौ च जगणौ सर्वाणि लघूणि भवेयुरिति भावः। इह अस्मिन् छन्दः शास्त्रे द्वादशाक्षरच्छन्दः प्रस्तावे वा तद् वृत्तं नाम रसं वद कथय। केचिदिदं 'ललितपदमि'त्याहुः। अत्र पादान्ते यतिरिति केचित्। उदाहरणम्—

'स्फुटसुषमा-मकरन्दमनोक्षं
व्रजललनानयनालि निपीतम्।
तव मुख तामरसं मुरशत्रो
हृदय तडागविकाशि ममास्तु॥'

हे मुरशत्रो मुरारे, स्फुटसुषमामकरन्दमनोक्षं स्फुटाः व्यक्ताः याः सुषमाः परमशोभाः, ता एव मकरन्दाः पुष्परसाः, मधुनि इति यावत्, तः मनोज्ञं हृद्यम्, व्रजललनालिनिपीतं व्रजललनानां व्रजवधूनां नयनानि नेत्राणि एव अलयः भ्रमराः तैर्निपीतमत्यादरेण अवलोकितं तव मुखमेव तामरसं पद्मं मुखतामरसं वदनकमल-मित्यर्थः। मम हृदयतडागविकाशि हृदयमेव तडागः सरः, तत्र विकाशि प्रफुल्लम् अस्तु भवतु॥७३॥

**भवति नजावथ मालती जरौ॥ यमुनेति केचित्॥७४**

भवतीति। नगण-जगणौ जगण-रगणौ च यदि स्यात्तदा मालती छन्दः। अर्थात् यस्य प्रतिचरणं आदौ नश्च जश्च नजौ नगण-जगणौ, अथ तदनु जश्च रश्च जरौ जगण-रगणौ च स्यातामित्यर्थः। पञ्चमाष्टम-दशम-द्वादशाक्षराणि गुरूणि शिष्टाणि च लघूनि भवेयुरित्याशयः। तत् मालती नाम वृत्तं भवति। पिङ्गलाचार्य्यास्तु वृत्तमिदं गाथाधिकारे 'वरतनु'रिति नाम्ना अन्तर्भाव्य षड्भि षड्भिरक्षरैर्यतिभामभिदधिरे। वृत्तिकारोऽपि तत्र त्रयमुदाहरणीकृत द्वितीयश्लोकमेवोदाहरणयत्वेनोपन्यस्तवान्। अपरे पुनर्मालत्यां पञ्चभिः सप्तभिश्च यतिरित्याहुरिति ज्ञेयम्।

उदाहरणम्—'इह कलयाच्युत-केलिकानन
मधुरससौरभसार-लौलुपः ।
कुसुमकृत-स्मित-चारुविभ्रमा
मतिरपि चुम्बति मालती मुहुः ॥'

हे अच्युत कृष्ण ! इह अस्मिन् पुरी दृश्यमाने इत्यर्थ केलिकानने क्रीड़ावने, मधुनः मकरन्दस्य यः रस सौरभसा रससौरभयोः स्वादगन्धयो र्यः स्मरः स्थिरांशः, तेन लोलुपः लुब्ध अलिर्भ्रमरोऽपि, कुसुमैः पुष्पैः कृतं स्मितम् ईषद्धासो यया स चारुः मनोहरः विभ्रमो विलासो यस्यां सा च सा चेति कुसुमकृ स्मितचारुविभ्रमा तां मालतीं मालतीलतां मुहुः पुनः पुन श्चुम्ब इति कलय पश्य। अत्र तिर्यगप्येवं विलासचतुरस्त्वं पुनरुदास इति गोप्याः खेदो गम्यते ॥७४॥

**भुजङ्गप्रयातं भवेद् यैश्चतुर्भिः ॥७५**

भुजङ्गेति । चतुर्भिर्यगणैर्भुजङ्गप्रयात छन्दः । अर्था 'भुजङ्गप्रयातं चतुर्भिर्यकारैः' य य य य। यस्य पादः चतुर्भिर्यका यगणैः रचितो भवतीति शेषः, यत्र प्रतिपादं चत्वारो यगण स्युरिति भावः, तत् भुजङ्गप्रयातं नाम वृत्तं भवेत् । अत्र पादा यतिरिति हलायुधः । उदाहरणम्—

'सदारात्मज-ज्ञातिभृत्यो विहाय
समेतं ह्रदं जीवनं लिप्समानः ।
मया क्लेशितः कालियेत्थं कुरुत्वं
भुजङ्गप्रयातं द्रुतं सागराय ॥'

सदारेति । कालियं प्रति कृष्णस्योक्तिरियम् । हे कालिय हे भुजङ्ग ! त्वं मया इत्थं अनेन प्रकारेण क्लेशितः पीड़ित

अतएव दाराश्च आत्मजश्च ज्ञातयश्च भृत्याश्चेति, दारात्मजज्ञाति-भृत्याः तैः सह वर्त्तमानः सदारात्मजज्ञातिभृत्यः, कलत्र-पुत्र-बन्धु-दासादिभिः सहित इत्यर्थः। त्वं जीवनं प्राणान् लिप्समानः लब्धुमिच्छन् चेदसीति शेषः। तदा एतं दृश्यमानं स्वं स्वकीयं कालियाख्यमित्यर्थः। इदं गभीरजलाशयं विहाय त्यक्त्वा द्रुतं शीघ्रं सागराय समुद्राय, तमुद्दिश्येत्यर्थः। प्रयातं प्रयाणम्, भावे क्तः, कुरु विधेहि। अन्यथा अचिरमेव त्वं कलत्रादिसहितो जीवनं हास्यतीति भावः ॥७५॥

**इह भवेन्नभजरैः प्रियम्बदा ॥७६**

इह भवेदिति। नगण-भगणौ जगण-रगणौ च यदि स्यातां तर्हि प्रियम्बदा छन्दः। अर्थात् भुवि भवेन्नभजरैः प्रियम्बदा, न भ ज र। यस्याः प्रतिपादं नश्च भश्च जश्च रश्च नभजराः, तैः नगण-भगण-जगण-रगणैरित्यर्थः, घटितं भवतीति शेषः। यत्र तुरीयाष्टम-दशम-द्वादशवर्णा गुरवः शिष्टाश्च लघवो भवेयुरिति भावः। सा भुवि पृथिव्यां प्रियम्बदा तन्नामकं वृत्तं कथ्यते इति शेषः। अत्र यतिरिति केचित् ॥७६॥

**त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥७७**

त्यौ त्याविति। मणिमालैव यतेरभावे पुष्पविचित्रा छन्दः। अर्थात् यस्याः पादे प्रथमं त् च यश्च त्यौ तगण-यगणौ ततोऽपि त्यौ तगण-यगणौ च स्यातामित्यर्थः। तृतीय-चतुर्थ-नवम-दशमाक्षराणि लघूनि तदितराणि च गुरूणि स्युरिति भावः। गुहस्य स्कन्दस्य वक्त्रैर्मुखैः षड्भिरक्षरैरित्यर्थः। छिन्ना यतिमती सा मणिमाला तन्नामकं वृत्तं भवेत्। उदाहरणम्—

'प्रह्वामरमौलौ रत्नोत्पलक्लिप्ते
जातप्रतिविम्बा शोणामणिमाला।
गोविन्दपादाब्जे राजी नखराणा-
मास्तां मम चित्ते ध्वान्तं शमयन्ती ॥'

रत्नोत्पलैः मणिभिः श्वेतैरित्यर्थः। क्लृप्ते रचिते, प्रह्व नम्रीभूता ये अमरा देवाः, तेषां मौलौ मुकुटे, जातं प्रतिवि यस्याः सा जातप्रतिविम्बा संक्रान्तप्रतिमा, अतएव शोणा रक्तव मणिमाला रत्नमालेवेत्यर्थः। गोविन्दपदाब्जे श्रीकृष्णचरणसरो नखराणां नखानां राजी श्रेणी, मम चित्ते मदीय मान ध्वान्तमन्धकारमज्ञानं वा शमयन्ती नाशयन्ती सती आस्ता तिष्ठतु ॥७७॥

**त्यौ त्याविति निर्दिष्टा पुष्पविचित्रा ॥७८**

त्यौ त्याविति। मणिमालैव यतेरभावे पुष्पविचित्र छन्दः ॥७८॥

**विभावरी तु सा जरौ जरौ यतः ॥७९**

विभावरीति। यत्र जगण-रगणौ द्विः पठिता, तद् विभाव छन्दः। **पञ्चचामरमित्यन्ये।**

**लघुर्गुरुर्वदन्ति पञ्चचामरम्। ज र ज र ॥**

अर्थात् यस्य पादं क्रमेण लघुरेको ह्रस्ववर्णः, गुरुरे दीर्घवर्णश्च स्यात्, प्रस्तावाद्द्वादस्वक्षरेषु यदि लघुर्गुरुर्लघुर्गुरुरित्ये सन्निवेशः स्यादित्यर्थः। द्वितीय-चतुर्थ-षष्ठाष्टम-दशम-द्वादशाक्षरा दीर्घाणि तदितराणि च लघूनि भवेयुरित्यभिप्रायः। तत् पञ्चचाम तत् संज्ञकं वृत्तं वदन्ति कथयन्ति विद्वांस इति शेषः। ग्रन्थान्तरेऽ 'विभावरी' 'स्वमोचचामरम्' इति नामनी। अत्र पादा

यतिरिति केचित्, षट्सु षट्स्वित्यपरे ॥७९॥

**धीरैरभाणि ललिता तभौ जरौ ॥८०**

धीरैरिति। यत्र तगण-भगण-जगण-रगणौ च स्यातान्तल्ललिता छन्दः। त भ ज र। यस्याः प्रतिपादं तश्च भश्च जश्च रश्च तभजराः, तैः तगण-भगण-जगण-रगणैरित्यर्थः, घटितं भवतीति शेषः। यत्र तुरीयाष्टम-दशम-द्वादशवर्णा गुरवः शिष्टाश्च लघवो भवेयुरिति भावः, सा भुवि पृथिव्यां ललिता तन्नामकं वृत्तं कथ्यते इति शेषः। अत्र पादान्ते यतिरिति केचित् ॥८०॥

**ननभर-रचिता कथितोज्ज्वला ॥८१**

ननभेति। नगण-द्वयेन भगण-रगणाभ्याञ्च उज्ज्वला छन्दः स्यात्। या नश्च नश्च भश्च रश्च ननभराः नगण-नगण-भगण-रगणाः, तैः सहिता युक्ता, भवतीति शेषः। यस्याः प्रतिपादं सप्तम-दशम-द्वादशवर्णान् विहाय सर्वे लघवो भवेयुरिति भावः। सा उज्ज्वला तन्नामकं वृत्तं गदिता कथिता, विद्वद्भिरिति। अत्रापि पूर्ववत् यति ॥८१॥

**अब्ध्यङ्गैः स्याज् जलधरमाला म्भौ स्मौ ॥८२**

अब्ध्यङ्गैरिति। मगण-भगणौ सगण-मगणौ च यदि स्यातां, चतुर्भिरष्टभिश्च यति सा जलधरमाला छन्दः। अर्थात् 'मो भः स्मौ चेज्जलधरमालाब्ध्यन्त्यैः' चेद् यदि छन्दसः प्रतिपादमादौ मः मगणः, भः भगणश्च, ततश्च स् च मश्च स्मौ सगण-मगणौ स्यातामित्यर्थः। यत्र प्रतिपादं पञ्चम-षष्ठ-सप्तमाष्टमाक्षराणि लघूनि शिष्टानि च गुरूणि स्युरिति भावः। तदा अब्धयश्च ते अन्त्यश्चेति अब्ध्यन्त्याः, तैश्चतुर्भिरष्टाभिश्चाक्षरैरित्यर्थः, छिन्नमिति शेषः। तद् जलधरमाला तन्नामकं वृत्तं कथ्यत इति शेषः। उदाहरणम्—

'या भक्तानां कलिदुरितोत्तप्तानां
तापच्छेदे जलधरमाला नव्या ।
भव्याकारा दिनकरपुत्रीकूल-
केलीलोला हरितनुरव्यात्सा वः ॥'

या हरितनुः कृष्णमूर्त्तिः स्मृता सतीति भावः। कलिदुरितोत्तप्तानां कलिकल्मषसंतप्तानां भक्तानां कृष्णमूर्त्तावनुरागशालिनां जनानामित्यर्थः। तापच्छेदे संतापनिवृत्तिविषये नव्या अभिनवा जलधरमाला मेघराजी तत् स्वरूपेत्यर्थः, भव्याकारा मनोहराकृतिः, दिनकरपुत्र्याः सूर्य्यतनयायाः, कालिन्द्या इति यावत्, कूले तीरे केलीलोला क्रीड़ाचञ्चला सा वः युष्मान् अव्यात् पातु ॥८२॥

**भुवि नवमालिनी न ज भ यैः स्यात् ॥८३**

भुवीति। नगण-जगणाभ्यां भगण-यगणाभ्याञ्च नवमालिनी छन्दः। अर्थात् इह 'नवमालिका' नजभयैः स्यात्। इह अस्मिन् द्वादशाक्षरछन्दः प्रस्तावे या प्रतिपादं नश्च जश्च भश्च यश्च नजभयास्तैः नगण-जगण-भगण-यगणैरित्यर्थः, घटिता भवतीति शेषः। यस्याः प्रतिचरणं पञ्चम-सप्तमैकादश-द्वादशाक्षराणि गुरूणि तदितराणि च लघूनि स्युरित्याशयः, सा नवमालिका नाम वृत्तं भवति। पिङ्गलमतेऽस्या 'नवमालिनी'ति नाम। अत्राष्टाभिश्चतुर्भिश्च यतिरिति हलायुधः। उदाहरणम्—

'धवलयशोंशुकेन परिवीता
सकल-जनानुरागघुसृणाक्ता ।
दृढ़गुणबद्धकीर्त्तिकुसुमौघै-
स्तव नवमालिनीव नृपलक्ष्मीः ॥'

(पिङ्ग, ६।४४) ॥८३॥

**स्वरशर-विरति र्न-नौ रौ प्रभा ॥८४**

स्वरेति। नगणद्वयं रगणद्वयञ्च यत्र स्यात्, सप्तभिः पञ्चभिश्च यतिस्तत् प्रभा छन्दः ॥८४॥

**( १३ )**

**त्रयोदशाक्षरातिजगती—यथा,**

**त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ॥८५**

त्रयोदशाक्षरेति—त्र्याशाभिरिति। भगण-नगणौ जगण-रगणौ गुरुश्च यत्र भवन्ति, त्रिभिर्दशभिश्च यतिः, तत् प्रहर्षिणी छन्दः। अर्थात् यस्याः पादे भश्च नश्च जश्च रश्च गश्च भनजरगाः, भगण-नगणौ जगण-रगण-गगणश्च स्युरित्यर्थः। चतुर्थ-पञ्चम-षष्ठ-सप्तम-नवमैकादशाक्षराणि विना सर्वाणि दीर्घाणि भवेयुरिति भावः। त्रयश्च आशाश्च त्राशाः, ताभिः, त्रिभिर्दशभिश्चाक्षरैरित्यर्थः, यतिमतीति शेषः। इयं सा प्रहर्षिणी तन्नामकं वृत्तं भवति। उदाहरणम्—

'गोपीनामधरसुधारसस्य पानै-
　　रुत्तुङ्गस्तनकलसोपगूहनैश्च।
आश्चर्य्यैरपि रतिविभ्रमैर्मुरारेः
　　संसारे मतिरभवत् प्रहर्षिणीह ॥'

गोपीनां गोपवधूनाम्, अधरसुधारसस्य अधरामृतद्रवस्य पानैः, उत्तुङ्गानां अत्युन्नतानां स्तनकलसानां कुचकुम्भानाम्, उपगूहनैरालिङ्गनैः, तथा आश्चर्य्यैरद्भुतैरनेकविधत्वादिति भावः। रतिविभ्रमैः सुरतविलासैश्च मुरारेः कृष्णस्यापि परब्रह्मरूपिणोऽपीति ध्वनिः, इह अस्मिन् संसारे, दुःखैकायने इति च व्यज्यते, प्रहर्षिणी प्रकृष्टानन्दमतिर्बुद्धिः अभवद् जातवती। गोपीनामधरमधुपीनां

तथा लोकोत्तरं माधुर्य्यं यथा तदाकृष्टं परब्रह्मापि दुःखाद्यभिहते संसारे प्रमोदमनुभवतीति भावः ॥८५॥

**तुरगरसयति नौ ततौ गः क्षमा ।।८६**

तुरगेति। नगणद्वयं तगणद्वयं गुरुश्च यत्र स्यात्, सप्तभिः षड्भिश्च यतिः, ततः क्षमा छन्दः ॥८६॥

**जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ।।८७**

जभाविति। जगण-भगणौ सगण-जगणौ गुरुश्च यत्र स्युः। चतुर्भिर्नवभिश्च यतिस्तद्रुचिरा छन्दः। अर्थात् यस्याः प्रतिपादं जश्च भश्च जभौ जगण-भगणौ सश्च जश्च सजौ सगण-जगणौ तथा ग् एको गगणश्च स्युरिति शेषः। द्वितीय-चतुर्थ-नवमैकादशाक्षराणि विहाय सर्वाणि लघूनि भवेयुरित्याशयः। सा चत्वारश्च ग्रहाश्चेति चतुर्ग्रहाः, तैः चतुर्भिर्नवभिश्चाक्षरैरित्यर्थः। विच्छिन्नेति शेषः, रुचिरा इति वृत्तं भवेत्। उदाहरणम्—

'पुनातु वो हरिरतिरासविभ्रमी
परिभ्रमत् व्रजरुचिराङ्गनान्तरे।
समीरणोल्लसितलतान्तरालगा
यथा मरुत्तरलतमालभूरुहः ॥'

समीरणेन वायुना उल्लसितानां आन्दोलितानां लतानाम्, अन्तरालं मध्यं गच्छतीति समीरणोल्लसितान्तरालगः, वायुचञ्चललताभिर्वेष्टित इत्यर्थः। मरुता वायुना तरलश्चञ्चलः, मरुत्तरलः, तमालभूरुहो यथा तमालतरुरिव अतिरासविभ्रमी अतिशयेन रासविलासी हरिः कृष्णः, व्रजरुचिरा जन्मान्तरे व्रजस्य याः रुचिरा मनोहरा अङ्गना वामलोचनास्तासाम्, अन्तरे मध्ये, ताभिः परिवृत इति भावः। परिभ्रमन् विचरन् सन् वः युष्मान् पुनातु

पवित्रयतु अत्र हरेर्व्रजाङ्गनानाञ्च यथोक्तविशेषणतमालभूरुहसाम्यं तथाविधलतासाम्यञ्च मदेन नवीनप्रणयिसमागमजन्य-हृदयावेगेन इति बोध्यम् ॥८७॥

**प्रभवति न न स स गैरिह चण्डी ॥८८**

प्रभवतीति। नगणद्वयं सगणद्वयं गुरुश्च यदि स्यात्तदा चण्डी छन्दः। अर्थात् नयुगल सयुगलैरिति चण्डी। न न स स ग। यस्य प्रतिचरणं नयुगलञ्च सयुगलश्च गश्च नयुगल-सयुगलगाः, तैः यथाक्रममवस्थितैर्नगण-नगण-सगण-सगण-गगणैरित्यर्थः, घटितं भवतीति शेषः। यत्र नवम-द्वादश-त्रयोदशवर्णान् विहाय सर्वे लघवो भवेयुरिति भावः। तत् चण्डीति नाम वृत्तं भवेत्। उदाहरणम्—'जयति दितिजरिपुताण्डवलीला-

कुपित-कवलकरकालियमौलौ।

चरणकमलयुगचापलचण्डी

पदनखरुचिजितभोगमणिश्रीः ॥'

कुपितस्य रुष्टस्य, अतएव कवलं ग्रासं करोतीति कवलकरः तस्य मुखं व्यादाय ग्रासं कर्त्तुं समुद्यतस्येत्यर्थः। कालियस्य तन्नाम्ना प्रसिद्धस्य नागस्य यो मौलिः शिरस्तस्मिन्, पदनखानां चरणनखराणां रुचिभिर्भाभिः जिता तिरस्कृता भोगमणेः फणास्थित-रत्नस्य श्रीः शोभा यया सा तादृशी, चरणकमलयोश्चरणसरोजयो र्यद् युगं युगलं तस्य यच्चपलं चञ्चलता, तेन चण्डी अत्यन्तकोपना, दितिजानां दैत्यानां रिपोः कृष्णस्य ताण्डवलीला उद्धतनृत्यविलासः जयति सर्वोत्कर्षेण वर्त्तताम् ॥८८॥

**वेदैरन्ध्रैर्म् तौ य स गा मत्तमयूरः ॥८९**

वेदैरिति। मगण-तगणौ यगण-सगणौ गुरुश्चेत् यत्र स्युः,

चतुर्भिर्नवभिश्च यतिः, तन्मत्तमयूर छन्दः। अर्थात् यस्य पा यथाक्रमं म् च तश्च म्तौ मगण-तगणौ यश्च सश्च गश्च यसगा यगण-सगण-गगणाश्च स्युरित्यर्थः। षष्ठ-सप्तम-दशमैकादशाक्षराणि लघूणि तदितराणि च गुरूणि भवेयुरिति भावः। वेदैश्चतुर्भि यतिः, वेदैश्चतुर्भिः रन्ध्रैः नवभिश्चाक्षरैर्विछिन्नमिति शेषः। त मत्तमयूरं नाम वृत्तं भवति। उदाहरणम्—

'लीलानृत्यन्मत्तमयूरध्वनिकान्तं
नृत्यन्नीपामोदिपयोदानिलरम्यम्।
रासक्रीड़ाकृष्टमना-गोपवधूभिः
कंसध्वंसीनिर्जनवृन्दावनमाप॥'

गोपवधूभिर्गोपाङ्गनाभिः, सहेति शेषः, रासक्रीड़ाकृष्टमना रासक्रीड़या रासलीलया आकृष्ट मन्मुखीकृतं मनो मानसं यस्य स तथोक्तः कंसध्वंसी कृष्णः, लीलानृत्यन् मत्तमयूरध्वनिकान्तं लीलया नृत्यन्तो ये मत्तमयूराः तेषां ध्वनिभिः केकारवैः कान्तं मनोहारि तथा नृत्यन्तो वायुना दोलायमाना ये नीपाः कदम्बकुसुमानि तेषाम्, आमोदो तत् सौगन्ध्यवाही यः पयोदानिलः, वर्षशीकर वानिति भावः। वायुः तेन रम्यम्, निर्न विद्यते जनो यत्र तत् निर्जनम्, निर्जनं च तद् वृन्दावनं चेति निर्जनवृन्दावनं आप जगाम॥८९॥

**भवति भुवि न स रैर्गेन गौरी ॥९०**

भवतीति। नगणद्वयं सगण-रगणौ गुरुश्चैते यत्र स्युः, तद् गौरी छन्दः॥९०॥

**कुटिलगतिर्नजौ सप्तभिः षड्भिस्तमौगः ॥९१**

कुटिलेति। यत्र नगण-जगणौ तगण-मगणौ गुरुश्च भवति सप्तभिः षड्भिश्च यति स्तत् कुटिलगति छन्दः॥९१॥

**उपस्थितमिदं ज्सौ त्सौ स गुरुरेको चेत् ॥६२**

उपेति। यत्र जगण-सगणौ तगण-सगणौ गुरुश्च भवति, उपस्थित छन्दः। अर्थात् यदि चेत् छन्दसः प्रतिपादं ज् च सश्च ज्सौ जगण-सगणौ त् च सश्च त्सौ तगण-सगणौ गुरुरेको गगणश्च स्युरित्यर्थः, द्वितीय-षष्ठ-सप्तमाष्टम-द्वादश-त्रयोदशाक्षराणि दीर्घाणि शिष्टाणि च लघूनि भवेयुरिति भावः, तदा इदं तद् वृत्तं उपस्थितं तन् संज्ञकं स्यात् ॥६२॥

**स ज सा जगौ च यदि मञ्जुभाषिणी ॥६३**

सजसा इति। यत्र सगण-जगणौ द्विः पठितौ गुरुश्चैक स्तत् मञ्जुभाषिणी छन्दः। इयं सुमङ्गलेति प्रबोधितेति सुनन्दनीति चान्यत्र। अर्थात् यदि चेत् छन्दसः प्रतिपादं सश्च जश्च सश्च सजसाः सगण-जगण-सगणाः, जश्च गश्च जगौ जगण-गगणौ च स्युरिति शेषः, तृतीय-पञ्चम-नवमैकादश-त्रयोदशाक्षराणि दीर्घाणि शिष्टाश्च च लघूनि भवेयुरित्याशयः। तदा तत् मञ्जुभाषिणी तन्नामकं वृत्तं भवति। अस्याः 'सुनन्दिनी' 'कनक प्रभे'ति च ग्रन्थान्तर संवेक्ष्य नाम्नी। अत्र पञ्चभिरष्टाभिश्चाक्षरैर्यतिरिति केचित्, पादान्ते यतिरिति हलायुधः। उदाहरणम्—

'अमृतोर्म्मिशीतलकरेण लालयं
स्तनुकान्तिश्चोरितविलोचनो हरे।
नियतं कलानिधिरसीति वल्लवी
मुदमच्युत-व्यधितमञ्जुभाषिणी॥'

हे हरे कृष्ण ! तनुकान्त्या देहशोभया चोरितानि अपहृतानि आकृष्टानीति यावत्, विलोचनानि जनानां नयनानि येन स तनुकान्तिचोरितविलोचनः, शरीरस्य कान्तिवैशिष्ट्यात् साग्रहं

लोकैर्दृश्यमान इत्यर्थः। त्वम् अमृतस्य या ऊर्म्मिस्तरङ्गः, तद्व शीतलेन करेण हस्तेन। पक्षे, अमृतोर्म्मिभिः सुधातरङ्गैस्त परम्पराभिरित्यर्थः, शीतलो यः करः किरणसमूहस्तेन, लालय स्पृशन् अस्मान् इति शेषः। नियतं निश्चितं कलानिधिः कला नृत्यादिचतुःषष्टिविद्यानां निधिर्निधानं पात्रमिति यावत्। पक्षे कलानां षोड़शकलानां निधिराश्रयश्चन्द्र इत्यर्थः। असि भवसि इति भवसि, इति एवं मञ्जु मधुरं यथा स्यात्तथा भाषिणी भाषण शीला वल्लवी गोपी अच्युते कृष्णे मुदं हर्षं व्यधित कृतवती ॥९३

**जतौ सजौ गो भवति सन्धिवर्षिणी ॥९४**

जताविति। जगण-तगणौ सगण-जगणौ गुरुश्च यत्र स तत् सन्धिवर्षिणी छन्दः ॥९४॥

**न न त त गुरुभिश्चन्द्रिकाऽश्वर्तुभिः ॥९५**

**उत्पलिनीति केचित्**

ननतेति। नगणयोस्तगणयोश्च युगलेन गुरुणा च चन्द्रिका छन्दः, सप्तभिः षड्भिश्च तस्मिन् यतिरित्यर्थः। अर्थात् यस्या प्रतिपादं नश्च नश्च तश्च तश्च गुरुश्च न न त त गुरवः, तैः घटित भवतीति शेषः। यत्र प्रतिपादं सप्तमाष्टमदशमैकादश-त्रयोदशा क्षराणि विहाय शिष्टानि लघूनि स्युरित्याशयः। अश्वाश्च ऋतवश्च अश्वर्त्तवः, तैः सप्तभिः षड्भिश्चाक्षरैरित्यर्थः, विच्छिन्नेति शेषः। सा चन्द्रिका नाम वृत्तं भवति। अन्यत्रास्य 'कुटिलगति' 'क्षेमे'ति च नामनी। उदाहरणम्—

'शरदमृतरुचश्चन्द्रिकाक्षालिते
दिनकरतनया-तीरदेशे हरिः।
विहरति रभसाद्वल्लवीभिः समं
त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥'

हरिः कृष्णः, शरदमृतरुचः शरत्कालीन-चन्द्रस्य याश्चन्द्रिका ज्योत्स्नाः, ताभिः क्षालिते धौते, विगतान्धकारे इति भावः, दिनकरस्य सूर्य्यस्य या तनया यमुना, तस्यास्तीरदेशे, वल्लवीभिः गोपवधूभिः समं सह, त्रिदिवयुवतिभिः स्वर्णरमणिभिः सह कोऽपि देवो यथा देव इव रभसात् हर्षाद् विहरति क्रीड़ति ॥९५॥

**इह नन्दिनीति स ज स सैर्गुरुयुक्तैः ॥९६**

इहेति। सगण-जगणौ सगणद्वयं गुरुश्चैते यत्र स्युः, तन्नन्दिनी छन्दः। 'कलहंसः' 'कुटिलः' 'सिंहनाद'श्चेत्यन्ये। स ज स स ग, स ज साः स गौ च कथितः 'कलहंसः'।

'यमुनाविहारकुतुके कलहंसी
व्रजकामिनी-कमलिनीकृतकेलिः।
जनचित्तहारि-कलकण्ठनिनादः
प्रमदं तनोतु तव नन्दतनूजः॥'

यस्य पादे सश्च जश्च सश्च सजसाः सगण-जगण-सगणाः, सश्च गश्च सगौ सगण-गगणौ च स्युरित्यर्थः, तृतीय-पञ्चम-नवम-द्वादश-त्रयोदशाक्षराणि दीर्घाणि तदितराणि च लघूनि भवेयुरिति भावः। तत् कलहंसः तदाख्यं वृत्तं कथितः, पण्डितैरिति शेषः। मल्लिनाथस्तु शिशुपालवधस्य षष्ठ-सर्गीय त्रिसप्ततितमश्लोकव्याख्यायां 'सजसा भवेदिह सगौ कुटजाख्यम्' इत्यनेन कलहंसोक्तगणैरेव घटितं छन्दः कुटजेति नाम्नाऽभिदधौ। तदेतत् संज्ञा भेदमात्र-मित्यनुसन्धेयम्। केचित् पुनः कलहंसस्य 'नन्दिनी'ति नामेत्याहु-रित्यवगन्तव्यम्। उदाहरणं यथा—यमुनेति। यमुनायां कालिन्द्यां यो विहारः जलकेलिस्तत्र यत् कुतुकं कुतूहलं तस्मिन् यमुनाविहार-कुतुके, 'कुतुकञ्च कुतूहलमित्यमरः'। व्रजकामिन्यः गोपाङ्गना एव कमलिन्यः पद्मिन्यः, तासु कृतः विहितः केलिः क्रीड़ा येन सः,

तथा जनचित्तहारी लोकमनोहारी अतएव कलो मधुरः कलनिनादः कण्ठध्वनिर्यस्य स तादृशः कलहंसः कलहंसरूपः नन्दतनूजः कृष्णः, तव प्रमदन् आनन्दं तनोतु विस्तारयतु करोत्विति यावत् ॥६६॥

**भवति मृगेन्द्रमुखं नजौ जरौ गः ॥६७ न ज ज र ग।**

भवतीति। नगण-जगणौ जगण-सगणौ गुरुश्च यदि स्यातां तर्हि मृगेन्द्रमुख छन्दः। अर्थात् यस्य पादे नश्च जश्च नजौ नगण-जगणौ, जश्च रश्च जरौ जगण-रगणौ गः एको गगश्च स्युरित्यर्थः, पञ्चमाष्टम-दशम-द्वादश-त्रयोदशवर्णान् विहाय शिष्टा लघवो भवेयुरिति भावः। तत् मृगेन्द्रमुखं नाम वृत्तं भवति। उदाहरणम्—

'गुरुभुजवीर्य्यभरं हरिं मदान्धा
युधि समुपेत्य न दानवा जिजीवुः।
क्षुधितमृगेन्द्रमुखं मृगा उपेत्य
क नु खलु बिभ्रति जीवनस्य योगम् ॥'

मदेन गर्वेण अन्धाः क्षेब्धा मदान्धाः, दानवा दैत्याः, युधि संग्रामे, गुरुर्महान् भुजवीर्य्यभरो बाहुवीर्य्यातिरेको यस्य गुरुभुजवीर्य्यभरम्, अत्यन्तबाहुवीर्य्यशालिनमित्यर्थः। हरिं कृष्णं समुपेत्य प्राप्य न जिजीवुः जीवितवन्तः, प्राणान् जहुरित्यर्थः। तथाहि—मृगाः पशवः क्व कस्मिन् स्थाने क्षुधितो बुभुक्षितः यो मृगेन्द्रः सिंहः तस्य मुखं आननम्, उपेत्य प्राप्य जीवनस्य योगं जीवनेन सह सम्बन्धं बिभ्रति नु धारयन्ति खलु? न कुत्रापीत्यर्थः, म्रियन्त एवेति भावः ॥६७॥ अत्र छन्दोमञ्जर्य्यां वैशिष्ट्यं प्रतिभाति।

**सजसाः सगौ च कथितः कलहंसः। स ज स स ग।**

'यमुनाविहारकुतुके कलहंसो व्रजकामिनी-कमलिनीकृतकेलिः।
जनचित्तहारि-कलकण्ठनिनादः प्रमदं तनोतु तव नन्दतनूजः ॥'

स ज स ग ग। सजसा जगौ च भवति 'प्रबोधिता'।

शयिता मृषा चटुलमान-निद्रया
रतिकेलिकुञ्जनिलये विलासिनी।
मुरवैरिणा श्रवणखर्जनादिना
स्मितमाततान सपदि प्रबोधिता॥

य म र र ग। यमौ रौ विख्याता चञ्चरीकावली गः।

न स र र ग। नसरयुगगौ श्चन्द्ररेखर्त्तुलोकैः।

ज त स ज ग। जतौ सजौ गो भवति 'मञ्जुहासिनी'।

न ज भ त त। 'कुटजगति' र्नजौ सप्तर्त्तुभ्तौ गुरुः।

य य य य ग। इन्दु 'कन्दुकं' यत्र येभ्यश्चस्मों गः।

एते क्रमात्तभसजसंज्ञका गणा
गश्चान्ततो यदि निहितो महीपते।
वेदैर्ग्रहै र्भवति यतिश्च शोभना
नागाधिपो वदति तदा 'प्रभावतीम्'॥

(वृत्तरत्नावली, ४३ श्लोक)

(१४)

चतुर्दशाक्षरा शर्करी—यथा,

मो गो गो भौ मः शरनवभिरसम्बाधा॥९८ म ग ग न न म।

चतुर्दशाक्षरेति—मो गो ग इति। मगण गुरुद्वयं नगणद्वयं मगणश्च यत्र स्यात्, पञ्चभिर्नवभिश्च विश्राम स्तदा असम्बाधा

छन्दः। अथेदानीं चतुर्दशाक्षरपादं वृत्तमभिधत्ते—म इति। चेद् यदि प्रतिचरणं यथाक्रमं मः एको मगणः, गौ द्वौ गगणौ, नौ द्वौ नगणौ मः एको मगणश्च स्युरित्यर्थः। षष्ठ-सप्तमाष्टम-नवम-दशमैकादशाक्षराणि लघूनि शिष्टानि चगुरूणि भवेयुरिति भावः। शराश्च नव च तैः, पञ्चभिर्नवभिश्चाक्षरैरित्यर्थः, विच्छिन्नेति शेषः। सा असम्बाधा नाम वृत्तं भवति। पिङ्गले 'असम्बाधा म्तौ न्सौ गाविन्द्रियनवकौ' (पिङ्ग, ७।१) इत्यस्या लक्षणम्। अस्मिन् पुनस्तद् अन्यथा कृतिमिति न परस्परविरोधः शङ्कनीयः, फलतो द्वयोरेव तुल्यत्वात्। उदाहरणम्—

वीर्याग्नौ येन ज्वलति रणरसात् क्षिप्ते
दैत्येन्द्रे जाता धरणिरियमसम्बाधा।
धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धं
साधूनां बाधां प्रशमयतु स कंसारिः॥

येन हरिणा रणरसात् रणस्य संग्रामस्य यो रसः अनुरागस्तस्मात् युद्धकरणानुरागाद्धेतोरित्यर्थः। ज्वलति दीप्यमाने, वीर्यम् एव अग्निः तस्मिन् वीर्याग्नौ। दैत्येन्द्रे दानवश्रेष्ठे कंसे इत्यर्थः, क्षिप्ते पतिते विनाशिते सतीति यावत्। इयं धरणिः पृथिवी असम्बाधा निरुपद्रवा जाता, धर्मस्थित्यर्थं धर्मरक्षणार्थं प्रकटितः तनुसम्बन्धो येन स प्रकटिततनुसम्बन्धः कृतशरीरपरिग्रहः कंसारिः कृष्णः साधूनां बाधां अन्तरायं प्रशमयतु शान्ति नयतु॥६८॥

**न न रस लघुगैः स्वरैरपराजिता ॥६९**

ननरसेति। नगणौ रगण-सगणौ लघुगुरू च यदि भवेत्, यतिश्च सप्तभिस्तह्र्यपराजिता छन्दः। अर्थात् यस्याः प्रतिचरणं नश्च नश्च रश्च सश्च लघुश्च गश्च ननरस लघुगाः, तैः क्रमशः

स्थितैः नगण-नगण-रगण-सगण-लगण-गगणैरित्यर्थः, घटितं भवतीति शेषः। यत्र सप्तम-नवम-द्वादश-चतुर्दशाक्षराणि विहाय सर्वाणि लघूनि स्युरिति भावः। सा स्वराश्च स्वराश्च स्वराः तैः सप्तभिः सप्तभिश्चाक्षरैरित्यर्थः, विच्छिन्नेति शेषः। अपराजिता तदाख्यकं वृत्तं भवति। उदाहरणम्—

'यदनवधिभुजप्रतापकृतास्पदा
यदुनिचयचमूः परैरपराजिता।
व्यजयत समरे समस्तरिपुव्रजं
स जयति जगतां गतिर्गरुड़ध्वजः॥'

यदनेति। यस्य गरुड़ध्वजस्य अनवधौ असो मे भुजप्रतापे बाहुवीर्ये कृतम् आस्पदं प्रतिष्टा यया सा यदनवधिभुजप्रतापकृतास्पदा, यस्यासीमवाहुबलरक्षिता इत्यर्थः। अतः परैः शत्रुभिः अपराजिता अनभिभूता, यदुनिचयचमूः यदुवंशसेनासमरे युद्धे समस्तम् अखिलं रिपुव्रजं शत्रुसमूहं व्यजयत जितवती, जगतां जगद्वासिनां गतिः शरणं नाथ इति यावत्, स गरुड़ध्वजः कृष्णः जगति सर्वोत्कर्षेण वर्त्तते इत्यर्थः ॥९९॥

**ज्ञेया वसन्ततिलका त भ जा जगौ गः ॥१०० त-भ-ज ज-ग-ग**

ज्ञेयेति। तगणो भगणो जगणयुगलं गुरुयुगलञ्च यत्र स्यात्, तद् वसन्ततिलकं छन्दः। केचिदेतत् क्लीवमाहुः। 'ज्ञेयं वसन्ततिलकं तभजा जगौ गः।' यस्य प्रतिपादं तश्च भश्च जश्च तभजाः तगण-भगण-जगणाः जश्च गश्च जगौ जगण-गगणौ गः पुनरेको गगणश्च स्युः। तृतीय-पञ्चम-षष्ठ-सप्तम-नवमदशमद्वादशवर्णा लघवस्तदितरे च गुरवो भवेयुरित्याशयः। तद् वसन्ततिलकं तन्नामकं वृत्तं ज्ञेयम्—अवगन्तव्यम्, सुधीभिरिति शेषः। अस्य काश्यपाचार्य्यमते 'सिंहोन्नता' सैतवाचार्य्यमते 'उद्धर्सिणी'

केषाञ्चिन्मते 'वसन्ततिलका' इति च नामानि। अत्र पादान्ते यतिरिति हलायुधः। अष्टभि षड्भिश्चेति च कालिदासः (श्रुतबोध २४ श्लो.) उदाहरणम्—ज्ञेयं वसन्ततिलकं तभजा जगौ गः।

फुल्लं वसन्ततिलकं तिलकं वनाल्या
　　लीलापरं पिककुलं कलमत्र रौति।
वात्येष पुष्पसुरभिर्मलयाद्रि-वातो
　　यातो हरिः स मथुरां विधिना हताः स्म॥

वनाल्याः काननश्रेण्याः, स्त्रीजनस्वरूपाया इति भावः। तिलकं विशेषकस्वरूपं वसन्तस्य वसन्तर्तोः तिलकं वसन्तकालीनं तिलपुष्पं फुल्लं विकसितम्। अत्र अस्मिन् वसन्तकाले लीलापरं क्रीड़ातत्परं पिककुलं कोकिलसमूहः कलम् अव्यक्तमधुरं यथा स्यात्तथा रौति कूजति, पुष्पैः वसन्तकालोद्भवैः कुसुमैः सुरभिः सुगन्धिः एष अनुभूयमान इत्यर्थः। मलयाद्रिवातः मलयाचलपवनः वाति वहति, सर्वमेव मधुरं विद्यत इति भावः। किन्तु स हरिः कृष्णः मथुरां यातो गत इति विधिना दैवेन हता विनाशिताः स्म वयमिति शेषः। इयमुद्धर्षिणीति सिंहोद्धतेति मधुमाधवेति च क्वचित् ॥१००॥

**न न भ न लगिति प्रहरणकलिका ॥१०१**

ननभेति। नगणद्वयं भगण-नगणौ लघुगुरू चैते यत्र स्युः तत् प्रहरणकलिका छन्दः। न न भ न ल ग। यस्याः पादे यथाक्रमं नश्च नश्च भश्च नश्च लश्च ग् च तेषां समाहारः, ननभनलग नगण-नगण-भगण-लगण-गगणाः स्युरित्यर्थः। सप्त-चतुर्द्दशाक्षरे त्यक्त्वा सर्वाणि लघूनि भवेयुरित्यभिप्रायः। सा प्रहरणकलिका नाम वृत्तं भवेत्। अस्या 'प्रहरणकलिता' इति पिङ्गलसम्मतं नाम। अत्र पूर्वोक्ता एव यतिरिति हलायुधः। उदाहरणम्—

व्यथयति कुसुमप्रहरणकलिका
प्रमदवनभवा तव धनुषि तता।
विरह-विपदि मे शरणमिह ततो
मधुमथनगुणस्मरणमविरतम्।

व्यथयतीति। कुसुमानि अरविन्दादि-पुष्पानि प्रहरणानि शरा यस्य तत् सम्बोधने हे कुसुमप्रहरण कुसुमशर, तव धनुषि कार्मुके तता आरोपिता, प्रमदानां वनं प्रमदवनम्, 'ङ्यापो संज्ञा छन्दसो बहुलम्' इति ह्रस्वः। 'तदेव राज्ञः प्रमदवनमन्तः पुरोचितम्' इत्यमरः। तत्र भवा जाता राज्ञामन्तपुरोचितोद्यान भवेत्यर्थः, कलिका कोरकः व्यथयति पीडयति मामिति शेषः। तत् तस्मात् पीडनात्, इह अनुभूयमानायामित्यर्थः। विरहविपदि विरहजनित-दुःखे, अविरतं निरन्तरं मधुमथनस्य कृष्णस्य ये गुणास्तेषां स्मरणं चिन्तनमेव मे मम शरणम् रक्षकम्। 'शरणं गृहरक्षित्रोरित्यमरः' ॥१०१॥

**मस्तो नो मो गौ यदि गदिता वासन्तीयम् ॥१०२**

मस्त इति। मगण-तगणौ नगण-मगणौ गुरु च यत्र स्यातां, तद् वासन्ती छन्दः। अर्थात् मात्तो नो मो गौ यदि गदिता वासन्तीयम्। यदि चेद् छन्दसः प्रतिपादं क्रमशः मात् मगणात् परं तस्तगणः, नो नगणः मो मगणः, गौ द्वौ गगणौ च स्याता-मित्यर्थ। षष्ठ-सप्तमाष्टम-नवमाक्षराणि विहाय सर्वाणि दीर्घानि स्युरिति भावः। तदा इयं वासन्तो तन्नामकं वृत्तं गदिता कथिता छन्दोविद्भिरिति शेषः। उदाहरणम्—

भ्राम्यद् भृङ्गीनिर्भर-मधुरालापोद्गीतैः,
श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला।

लीलालोला पल्लवविलसद्धस्तोल्लासैः,
कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥

भ्राम्यदिति। कंसस्यारातिः शत्रुः कृष्णः इत्यर्थः, तस्मिन् नृत्यति सति, श्रीखण्डाद्रेश्चन्दनाचलस्य, मलयपर्वतस्येति यावत् अद्भुता अपूर्वा ये पवना वातास्तैरित्याशयः, मन्दान्दोला मन्दमन्द कम्पिता, तथा पल्लवाः किसलया एव विलसन्तो दीप्यमाना ये हस्तास्तेषामुल्लासा आन्दोलनानि तैर्विशिष्टा, लीलालोला क्रीड़ा-चपला, किञ्च भ्राम्यन्तीनामितस्ततो विचरन्तीनां भृङ्गीणां भ्रमरीणां ये निर्भर—मधुरालापाः निर्भरं सातिशयं यथा स्यात्तथा मधुरालापाः श्रुतिमधुरगुञ्जनानि, ते एव उद्गीतानि उच्चैर्गानानि, तैरुपलक्षिता सती इयं परिदृश्यमाना वासन्ती माधवीलतासदृशी अभूत् कृष्णो नृत्यति अतो मया अपि नर्त्तितव्यमिति मनसि कृत्य तेन सार्द्धमनृतत्यदिवेत्यर्थं ॥१०२॥

**द्विः सप्तच्छिदि 'लोला' म्सौ म्भौ गौ चरणे चेत् ॥१०३**

**म स म भ ग ग।**

द्विसप्तेति। मगण-सगणौ गुरू च यत्र स्यातां सप्तभिश्च विच्छेदः, तल्लोला छन्दः।

चेद् यदि द्विर्द्विवारं सप्तभिश्छिनत्ति अर्थादात्मानमिति सप्तश्छित्, तस्मिन् सप्तभिः सप्तभिश्चाक्षरैर्विच्छिन्ने इत्यर्थः, चरणे पादे यथाक्रमं म् च सश्च म्सौ मगण-सगणौ म् च भश्च म्भौ मगण-भगणौ द्वौ गगणौ च स्यातामित्यर्थः। प्रतिपादं चतुर्थ-पञ्चमैकादशाक्षराणि लघूनि शिष्टानि च गुरूणि भवेयुरित्याशयः। तदा लोला तन्नामकं वृत्तं भवेत्। उदाहरणम्—

मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रम-लोला,
त्रैलोक्याद्भुतरूपो गोविन्दोऽति-दुरापः।

तद् वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे,
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥

मुग्धे-इति। हे मुग्धे हे मूढ़े, यौवनलक्ष्मीः यौवनश्रीः विद्युद्विभ्रमलोला तडित् स्फुरणवत् चञ्चला, अस्थिरेति भावः। तथा त्रैलोक्ये अद्भुतमतुलं रूपं यस्य स त्रैलोक्याद्भुतरूपः लोकत्रये अनुपम-सौन्दर्य्यः गोविन्दः कृष्णश्च अति दुरापः अतिदुर्ल्लभः। तत् तस्मात् गुञ्जद्भृङ्गसनाथे गुञ्जन्त ये भृङ्गाः तैः सनाथे सहिते वृन्दावनकुञ्जे वृन्दावनस्थितलतागृहे श्रीनाथेन कृष्णेन समेता सङ्गता मिलितेति यावत्, स्वच्छन्दं यथा स्यात्तथा केलिं क्रीडां कुरु विधेहि ॥१०३॥

**इन्दुवदना भ ज स नैः स-गुरुयुग्मैः ॥१०४ भ ज स न ग ग।**

इन्दुवदनेति। यत्र भगण-जगण-सगण-नगणाः स्युर्गुरुयुग्मञ्च तदिन्दुवदना छन्दः। अर्थात् यस्या प्रतिचरणं गुरुयुग्मेन सह वर्त्तमानैः सगुरुयुग्मैः परवर्त्तिभ्यां द्वाभ्यां गगणाभ्यां सहितैरित्यर्थः। भश्च जश्च सश्च नश्च भजसनाः, तैः भगण-जगण-सगण-नगणैः, घटितं भवतीति शेषः। सा इन्दुवदना नाम वृत्तं भवति। पिङ्गल मते अस्याः 'वरसुन्दरी' इति नामान्तरम्। अत्र पादान्ते यतिरिति हलायुधः। उदाहरणम्—

स्वादुशिशिरोज्ज्वल-सुगन्धिजलपूर्णं
वीचिचयचञ्चलविचित्र-शतपत्रम् ॥

हंसकलकूजित-मनोहरतटान्तं
पश्य वरसुन्दरि सरोवरमुदारम् ॥
(पिङ्ग० ८ अ० ९ सू०) ॥१०४॥

**स्वरभिदि यदि नौ तौ च 'नान्दीमुखी' गौ ॥१०५**

**वसन्तोऽयमित्यन्ये । न न त त ग ग।**

स्वरेति। यत्र नगणयोस्तगणयोश्च युगलं गुरुयुगलञ्च स्यात् सप्तभिर्यतिस्तन्नान्दीमुखी छन्दः। अर्थात् यदि चेत् स्वरैः सप्तभिः सप्तभिरक्षरैः भिनत्ति अर्थादात्मनमिति स्वरभित्, तस्मिन् स्वरभिदि सप्तभिः सप्तभिरक्षरैर्विहितयतिके इत्यर्थः। छन्दसः प्रतिचरणे इति शेषः, यथाक्रमं नौ द्वौ नगणौ, तौ द्वौ तगणौ च स्यातामित्यर्थः। सप्तमाष्टमदशमैकादश-त्रयोदश-चतुर्दशाक्षराणि दीर्घाणि तदितराणि च ह्रस्वानि भवेयुरित्यभिप्रायः, तदा नान्दीमुखी तदाख्यकं वृत्तं भवेत्। उदाहरणम्—

स्वरसखगकुलालापनान्दीमुखीयं
लहरिभुजलया चारुफेन-स्मितश्रीः।
मुरहरफलयाऽऽसत्तिमासाद्य किन्ते
प्रमुदित हृदया भानुजा नृत्यतीह ॥

हे मुरहर कृष्ण! सरसानां सानुरागाणां खगकुलानां पक्षिसमूहानां आलापा कूजनानि एव नान्द्यो मङ्गलस्तुतयः, ता एव मुखमिव मुखं नर्त्तनप्रारम्भो यस्याः सा सरसखगकुलालाप-नान्दीमुखी, तथा चारवो मनोहराः फेनाः एव स्मितस्य ईषद्धासस्य श्रियः शोभा यस्याः सा चारुफेनस्मितश्रीः, तथा लहरयः तरङ्गा एव भुजलया बाहुल्लासविशेषा यस्यास्तादृशी इयं भानुजा यमुना ते तव आसत्तिं सान्निध्यम् आसाद्य प्राप्य प्रमुदितहृदया हृष्टचित्ता सती इह किं कथं नृत्यति? कलय पश्य तदिति शेषः ॥१०५॥

**सजसा य्लगाश्च वसुधा क्षश्च ग्रहैः ॥१०६**

सजसा इति। यत्र सगण-जगणौ सगण-यगणौ लघुगुरू च स्यातां, तद् वसुधा छन्दः ॥१०६॥

**युग-दिग्भिः कुटिलमिति मतं सभौ न्यौ गौ ॥१०७**

युगेति। सगण-भगणौ नगण-यगणौ गुरू च यत्र स्यातां चतुर्भिर्दशभिश्च यतिः भवेत्तत् कुटिलच्छन्दः। अर्थात् युगदिग्भिः 'कुटिल'मिति सभौ न्यौ गौ चेत्। स भ न य ग ग। चेद् यदि छन्दसः प्रतिपादं क्रमशः सश्च भश्च सभौ सगण-भगणौ न् च यश्च न्यौ नगण-यगणौ गौ द्वौ गगणौ च स्यातामित्यर्थः। तच्चरणं पुनः युगाश्च दिशश्च युगदिशश्च, ताभिश्चतुर्भिदशभिश्चाक्षरैरित्यर्थः। विच्छिन्नं भवतीति शेषः, तदा तत् कुटिलमिति नाम वृत्तं भवेत् ॥१०७

**छन्दो मञ्जर्य्यामत्राधिकानि छन्दांसि वर्ण्यन्ते—**

**न न त ज ग ग। ननतज गुरुगैः सप्तयतिर्नदी स्यात् (१)**

**लक्ष्मी रस्त विरामा म्सौ तभौ गुरुयुग्मम् स म त भ ग ग।**
**'लक्ष्मी' (२)**

**त्रिननगगिति वसुयति सुपवित्रम्। न न न न ग ग।**
**सुपवित्रम् वृत्तम् (३)**

**मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ। म भ न य ग ग**
**मध्यक्षामा वृत्तम् (४)**

**नजभजला गुरुश्च भवति प्रमदा। न ज भ ज ल ग।**
**प्रमदा वृत्तम् (५)**

**सजसा यलौ गिति शरग्रहै'र्मञ्जरी'। स ज स य ल ग (६)**

**नजभजगैर्गुरुश्च वसुषट् 'कुमारी'। न ज भ ज ग ग (७)**

**नरनरैर्लगौ च रचितं 'त्वुकेशरम्'। न र न र ल ग (८)**

**म्भौ न्यौ ल्गौ चेदिह भवति च 'चन्द्रौ रसः' म भ न य ल ग (९)**

**'वासन्तीयं' स्यादिह खलु मतौ न्यौ गौ चेत्। म त न य ग ग (१०)**

**'चक्रपद' मिह भनननल गुरुभिः। भ न न न ल ग (११)**

**( १५ )**

**पञ्चदशाक्षरातिशक्करी (पञ्चदशाक्षरा वृत्तिः)—यथा,**

**द्विहतहय लघुरथ गिति शशिकला ॥१०८**

पञ्चदशाक्षरेति—द्विहतेति। चतुर्दशलघवो गुरुश्चैको यत्र स्युस्तच्छशिकला छन्दः। अर्थात् गुरुनिधन-मनुलघुरिह 'शशिकला' न न न न स। इह अस्मिन् छन्दो ग्रन्थे यस्याः पादः गुरुः गुरुवर्णः निधने अन्ते यस्य स गुरुनिधनः, मनवश्चतुर्दशवर्णा लघवो यस्मिन् समनुलघुः, गुरुनिधनश्चासौ मनलघुश्चेति गुरुनिधनमनुलघुः स्यादिति शेषः, यत्रान्त्यं विहाय सर्वे वर्णा लघवो भवेयुरिति भावः। सा शशिकला तदाख्यकं वृत्तं भवेत्। पिङ्गलमते अस्याः 'श्चन्द्रावर्त्ता' इति संज्ञान्तरम्। अत्र स्वरैर्वसुभिश्च यतिरिति हलायुधः। उदाहरणम्—

मलयजतिलकसमुदित शशिकला
　　व्रजयुवतिलसदलिकगगन गता।
सरसिजनयथहृदयसलिलनिधिं
　　व्यतनुत वितत रभस परितरलम्॥

मलयेति। व्रजयुवतीनां व्रजवधूनां लसत् शोभमानं यत्

अलिकं ललाटम्, 'ललाटमलिकम्' इत्यमरः। तदेव गगनं वियत्, तत्र गता स्थिता, मलयजश्चन्दनं तस्य तिलकं विशेषकस्तदेव समुदितशशिकला समुद्गतचन्द्रकला कर्त्री, सरसिजनयनस्य पुण्डरीकाक्षस्य कृष्णस्येति यावत्, हृदयं चित्तमेव सलिलनिधिः समुद्रः तम्, विततेन प्रभूतेन रभसेन हर्षेण परितरलं सर्वतश्चञ्चलं व्यतनुत कृतवती ॥१०८॥

**स्रगिह भवति रस–नवधा यतिरियम् ॥१०९ स्रगिति–षड्भिर्नवभिश्च यदि श्चेद् भवति, तर्हि शशिकलैव स्रक् छन्दः स्यात् ।**

प्रागुक्त शशिकला छन्दसो यतिभेदेन नामभेदं प्रदर्शयितुमाह—स्रगियमिति। इयं प्रागुक्ता शशिकला एव रसैः षड्भिः नवभिश्च रचिता यतिर्विरामो यस्यां सा तादृशी सती स्रक् नाम वृत्तं भवति। पिङ्गलमतेऽस्या 'माले'ति संज्ञान्तरम्। उदाहरणम्—

अयि सहचरि रुचिरतरगुणमयी
　　म्रदमवसतिरनपगतपरिमला।
स्रगिव निवस विलसदनुपमरसा
　　सुमुखिमुदिततदनुजदलनहृदये ॥

अयीति। अयि सुमुखि ! शोभनाख्ये सहचरि सखि, रुचिरतरगुणमयी रुचिरतरा ये गुणाः सौन्दर्य्यादयः, तन्मयी तत् प्रचुरेत्यर्थः। अन्यत्र–मनोहरसूत्ररचिता, म्रदिमवसतिः म्रदिम्नो मार्दवस्य वसतिराश्रयरूपा, मार्दव भूयिष्टेत्यर्थः। इदमुभयत्र समानम्। तथा, न अपराणां दूरीभूतः परिमलः सौरभम् एकत्र पद्मिनीनायिकात्वादपरत्र चापर्य्युषितत्वाद् यस्याः सा अनपगत-परिमला, अतएव विलसन् उद्गच्छन् अनुपमः अतुलः रसः, एकत्र अनुरागः अपरत्र च मधु यस्याः सा विलसदनुपमरसा, स्रक् माला

इव त्वं मुदितस्य हृष्टस्य दनुजदलनस्य कृष्णस्य हृदये वक्षसि निवस तिष्ठ तं भजस्वेत्यर्थः ॥१०९॥

**वसुमुनि यतिरिह गुणमणिनिकरः ॥११०**

वसुमुनीति। अष्टभिः सप्तभिश्च यतिश्चेद् भवति, तर्हि गुणमणिनिकरोऽपि सैव भवति। अर्थात् वसुमुनियतिरिति। 'मणि गुणनिकरः' वसवश्च मुनयश्च वसुमुनयः, तैरष्टाभिः सप्तभिश्चाक्षरैरित्यर्थः, यतिर्विरामो यस्यां सा वसुमुनियतिः शशिकलेति शेषः। मुनिगुणनिकर इति वृत्तं भवति। अस्योदाहरणम्—'नरकरिपुरवतु निखिलसुरगति-

रमितमहिमभर-सहजनिवसतिः।

अनवधिमणिगुणनिकरपरिचितः

सरिदधिपतिरिव धृततनु विभवः॥'

नरकेति। निखिलसुराणां समस्तदेवानां गतिः शरणम् आश्रय इति यावत्, तथा अमितानां अपरिमितानामशेषाणामित्यर्थः, महिम्ना माहात्म्यानां यो भरः अतिशयः, तस्य सहजा नैसर्गिकी निवसतिरास्पदम्, किञ्च, नास्ति अवधिर्येषां ते अनवधयः असंख्या इत्यर्थः। ये मनयः पद्मराग-मरकतादीनि रत्नानि, तेषां गुणनिकरैः शुक्लत्वकृष्णत्वादिभिः परिचितः परिज्ञातः, प्रकाशमान इत्यर्थः। तथा धृत गृहीतस्तन्वा शरीरेण विभवः सम्पद् येन स धृततनुविभवः। एतानि विशेषणानि समुद्रपक्षेऽपि यथा सम्भवं योज्यानि। नरकस्य तन्नामकासुरस्य निरयस्य वा रिपुर्विनाशकः, कृष्ण इति यावत्, सरिदधिपतिः समुद्र इव अवतु रक्षतु जनानिति शेषः ॥११०॥

**न न म य य युतेयं मालिनी भोगि लोकैः ॥१११**

ननमयेति। नगणद्वयेन मगणेन यगणद्वयेन च मालिनी

छन्दः। अष्टभिः सप्तभिश्च यतिरित्यर्थः। अर्थात् या प्रतिपादं नश्च नश्च मश्च यश्च यश्च ननमयया:, तैस्तथोक्तैर्गणैः युता युक्ता स्यादिति शेषः। इयं सा भोगिलोकैरष्टाभिः सप्तभिश्चाक्षरैरित्यर्थः। विच्छिन्ना सतीति शेषः, मालिनी नाम वृत्तं भवति। उदाहरणम्—

मृगमदकृतचर्चा पीतकौशेयवासा
　　रुचिरशिखिशिखण्डा बद्धा धम्मिल्लपाशा।
अनृजुनिहितमंसे वंशमुत्क्वाणयन्ती
　　धृतमधुरिपुलीला मालिनी पातु राधा॥

मृगेति। मृगमदेन कस्तूर्य्या कृता विहिता चर्चा अङ्गरागो यया सा मृगमदकृतचर्चा, तथा पीतं हारिद्रम् अतएव कौषेयं 'रेशम' इति प्रसिद्धतन्तुभिर्निर्मितं वासो वसनं यस्याः तथोक्ता, रुचिरैः मनोहरैः शिखिशिखण्डैः मयूरवर्हैः आवद्धः संयतः, परिवेष्टित इति यावत्, धम्मिल्लपाशः संयतकेशकलापः कवरीत्यर्थः। यया तादृशी मालिनी गृहीतमालिका, किञ्च ऋजु सरलं तन्न भवतीति अनृजु कुटिलम्, तद् यथा स्यात्तथा अंसे स्कन्धदेशे निहितं स्थापितं वंशं वंशीम्, उत् क्वाणं यन्ती उच्चैर्वादयन्ती, अतएव धृता अनुकृता मधुरिपोः कृष्णस्य लीला विलासो यया सा तथाभूता राधा, पातु रक्षतु जनानिति शेषः॥१११॥

**भवति नजौ भजौ रसैर्हि तौ प्रभद्रकम् ॥११२**

**(सुकेशरमित्यन्ये)**

भवतीति। नगण-जगण-भगण-जगण-गगणैः प्रभद्रकम्। अर्थात् यस्य पादे नश्च जश्च नजौ नगण-जगणौ, भश्च जश्च भजौ भगण-जगणौ रसैर्हि तौ अन्ते रगणविशिष्टौ स्याताम्, तत् प्रभद्रकं नाम वृत्तं भवति। अत्र सप्तभिरष्टभिश्च यतिरिति केचित्॥११२॥

**स-ज-ना नयौ शरदशकविरतिरेला ॥११३**

सजना इति। यत्र सगण-जगणौ नगणद्वयं यगणश्चैते भवन्ति, तदेला छन्दः। पञ्चभिर्दशभिश्च तस्मिन् यतिर्भवेत्। अर्थात् स ज न न य, सजना नयौ शरदश-यतिरिय'मेला'। यस्याः प्रतिपादं सश्च जश्च नश्च सजनाः सगण-जगण-नगणाः, नश्च यश्च नयौ नगण-यगणौ च स्यातामित्यर्थः। इयं सा शरैर्दशभिश्च यतिर्यस्यां सा पञ्चभिश्चाक्षरैर्यतिमतीत्यर्थः। एला तन्नामकं वृत्तं भवति ॥११३॥

**एकन्यूनौ विद्युन्माला पादौ चेल्लीलाखेलः ॥११४**

म म म म म। चेत् यदि विद्युन्मालाया 'मो मो गो गो विद्युन्माला' इत्युक्त लक्षण-विद्युन्मालाच्छन्दस इत्यर्थः, पादौ मिलितचरणद्वयम्, एकेन अन्तिमेनैकवर्णेन न्यूनौ हीनौ स्याताम्, प्रतिपादं पञ्च मगणाः स्युरित्याशयः। तदा लीलाखेलस्तन्नामकं वृत्तं भवति। वृत्तरत्नाकरमतेऽस्य 'कामक्रीड़े'ति नामान्तरम्। उदाहरणम्—पायाद्वो गोविन्दः कालिन्दीकूलक्षौणी चक्रे

रासोल्लासक्रीड़द्गोपीभिः सार्द्धं लीलाखेलः।

मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीड़ाभिर्लोलो

यद्वद्देवानामीशः स्ववेंश्याभिः खेलन्तीभिः॥

पायादिति। मन्दाकिन्या आकाशगङ्गायास्तीरोपान्ते तट-समीपे स्वैरक्रीड़ाभिः स्वच्छन्दविहारैः करणे तृतीया, खेलन्तीभिः क्रीड़ापरायणाभिः स्ववेंश्याभिः अप्सरोभिः, सह स्थित इति शेषः। अतएव लोलः क्रीड़ा चपलः देवानामीशो यद्वत् इन्द्र इव, कलिन्दस्यापत्यं स्त्री कालिन्दी यमुना, तस्याः कूले तटे यत् क्षौणी चक्रं वलयीकृतभूमिभागस्तत्र रासोल्लालेन क्रीड़न्त्यः खेलन्त्यः सा गोप्यः गोपललनाः, ताभिसार्द्धं लोला विलासस्तद्युक्ता खेला

क्रीड़नं यस्य स तादृशः गोविन्दः कृष्णः वो युष्मान् पायाद् रक्षतु ॥११४॥

**विपिनतिलकं न-स-न-रेफयुग्मैर्भवेत् ।११५**

विपिनेति। नगण-सगणाभ्यां नगणेन रगणेन युग्मेन च विपिनतिलकच्छन्दः। अर्थात् यस्य प्रतिपादं नश्च सश्च नश्च रेफयुग्मञ्च नसनरेफयुग्मानि, तैः नगण-सगण-नगण-रगण-रगणैरित्यर्थः, न स न र र। घटितं भवतीति शेषः। तद्विपिनतिलकं नाम वृत्तं भवेत्। उदाहरणम्—

'विपिनतिलकं विकसितं वसन्तागमे
　　मधुकृतमदैर्मधुकरैः क्वणद्भिर्वृतम्।
मलयमरुता रचितलास्यमालोकयन्
　　व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः॥'

विपिनेति। वसन्तस्य तदाख्यस्य ऋतोः आगमे आविर्भावे वसन्तकाल इत्यर्थः। विकसितं प्रफुल्लम्, मधुना कुसुमरसेन वसन्तकालेन वा कृतो विहितः मदो मत्तता येषां तैर्मधुकृतमदैः, अतएव क्वणद्भिः गुञ्जद्भिः, मधुकरैः मधुपैः वृतं व्याप्तम्, मलयमरुता मलयसमीरणेन रचितम् अनुष्ठितं लास्यं नर्त्तनं यस्य तादृश्यं मन्दमन्दमान्दोलितमित्यर्थः। विपिनतिलकं वनप्ररूढ़तिलपुष्पम्, आलोकयन् पश्यन् मुग्धः मोहपरवशः हरिः कृष्णः व्रजयुवतिभिर्व्रजाङ्गनाभिः सहेति शेषः, विहरति स्म विहृतवानित्यर्थः ॥११५॥

**म्रौ मो यो चेद् भवेतां सप्ताष्टकं चन्द्रलेखा ॥११६**

म्रौम इति। मगण-रगण-मगण-यगणयुगलैश्चन्द्रलेखा छन्दः, सप्तभिरष्टभिश्च तत्र यतिरित्यर्थः। चेद् यदि छन्दसः प्रतिपादं क्रमेण म् च तश्च म्रौ मगण-रगणौ, मो मगणः, यौ द्वौ यगणौ च भवेयुः, तदा सप्ताष्टकैः सप्तभिरष्टाभिश्चाक्षरैरित्यर्थः। विच्छिन्नेति

शेषः। चन्द्रलेखा तन्नामकं वृत्तं भवति। उदाहरणम्—

विच्छेदे ते मुरारे पाण्डुप्रकाशा कृशाङ्गी
म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा।
राधाऽम्भोदस्य गर्भे लीना यथा चन्द्रलेखा
किञ्चाऽऽर्त्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम्।

विच्छेद इति। हे मुरारे कृष्ण! ते तव विच्छेदे विरहे कृशानि अङ्गानि यस्याः सा कृशाङ्गी क्षीणवयवेत्यर्थः, तथा पाण्डुः शुभ्रः प्रकाशो दीप्तिर्यस्याः सा पाण्डुप्रकाशा सा राधा राधिका म्लाना मलिना छाया शोभा यस्य तत् सदृशं दुकूलं वस्त्रं विभ्रती परिदधाना सती, अत्र म्लानच्छायेति युक्त पाठः। अम्भोदस्य जलदस्य गर्भे अभ्यन्तरे लीना मेघाच्छादितेत्यर्थः, चन्द्रलेखा इव न भ्राजते न शोभामावहति। किञ्च, आर्त्ता कातरा सती त्वां स्मरन्ती चिन्तयन्ती ध्रुवं निश्चितं जीवयोगं धत्ते प्राणान् धारयतीत्यर्थः॥११६॥

## तूणकं समानिका पदद्वयं विनान्तिमम् ॥११७

गुरुलघुरगण-जगणैर्गुरुलघुरगण-लघुगुरुभिश्च तूणकच्छन्दः। यस्याः पादे समानिकायाः 'ग्लौ रगौ समानिका तु' इत्युक्तलक्षणस्य समानिका छन्दसः, पदद्वयं मिलितचरणद्वयम्, अन्तिमम् अन्त्याक्षरं विना भवति। अयुग्माक्षराणि दीर्घाणि तदितराणि च ह्रस्वानि स्युरित्याशयः। तत् तूणकं नाम वृत्तं भवेत्। उदाहरणम्—

सा सुवर्णकेतकं विकासि भृङ्गपूरितं
पञ्चबाणबाणजालपूर्णहेमतूणकम्।
राधिका वितर्क्य माधवाद्य मासि माधवे
मोहमेति निर्भरं त्वया विना कलानिधे॥

सेति। कला चतुःषष्टिविद्याः, तासां निधिराश्रयः, तत

सम्बुद्धौ हे कलानिधे ! चतुःषष्टिकलानिपुण-माधव कृष्ण ! सा राधिका, अद्य सम्प्रति मधौ माधवस्तस्मिन् वैशाखे मासि विकासि विकसनशीलम्, अतएव भृङ्गैः भ्रमरैः दूरितं व्याप्तं सुवर्णकेतकं स्वर्णकेतकीपुष्पं, पञ्चबाणस्य पञ्चशरस्य, कामस्येति यावत्। वाणजालैः शरसमूहैः पूर्णं हेमतूणकं हिरण्मयतूणीरं वितर्क्य सन्दिह्य तया विना तव विरहेनेत्यर्थः, निर्भरम् अतिमात्रं मोहं मूर्च्छाम् एति गच्छति ॥११७॥

**चित्रा नामच्छन्दश्चित्रश्चेत् त्रयो मा य-कारौ ॥११८**

चित्रेति। यत्र मगणत्रयं यगणद्वयञ्च स्यात्तच्चित्रा छन्दो भवेत्। चित्रा छन्दश्च तदेव कथ्यते। चेद् यदि छन्दसः प्रतिचरणं क्रमशः त्रयो मा मगणाः, यकारौ द्वौ यगणौ च स्याता-मित्यर्थः, तदा चित्रा नाम चित्रं मनोहरं छन्दो भवति। उदाहरणम्—गोपालीलीलालोला यद्वत् कलिन्दात्मजान्ते

खेलन्मुक्ताहारारण्य स्रग्लसन्मूर्धचित्रा।

कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीड़तोयं

कोऽन्यः स्वर्गो मोक्षो वाऽस्माद्विद्यते तन्न जाने॥

गोपेति। गोपानां अर्थात् गोपबालानां या आली श्रेणी, सङ्घ इति यावत्। तथा या लीला खेलनं तत्र लोला आग्रहवती, गोपबालकैः सार्द्धं क्रीड़ाभिलाषिणीत्यर्थः। खेलन् इतस्ततः सञ्चलन् मुक्ताहारो यस्यास्तादृशी, तथा अरण्ये भवानि आरण्यानि पुष्पानीत्यर्थः। तेषां स्रजा मालया लसन् शोभमानः यो मूर्द्धा शिरस्तेन चित्रा मनोहारिणी, कंसरातेः कृष्णस्य इयं मूर्त्तिः, कलिन्दात्मजाया यमुनाया अन्ते तटे यद्वद् यथा क्रीड़ति खेलति, तद्वत् तथा मे मम हृदि मानसे क्रीड़तु इत्यर्थः। ननु स्वर्गमोक्षावपि विद्यते इति तौ विज्ञाय भगवत् क्रीड़ामेव कामयसे इत्याशङ्क्य

भगवत् साक्षात्कार एव सर्वमित्याह—कोऽन्य इति। अस्माद् हृदये क्रीड़ाकरणात्। एतेन भगवत् साक्षात्कार उक्तः। अन्यः सर्गो मोक्षो वा कः किमात्मकः, तत् न जाने अहमिति शेषः। भगवत् साक्षात्कारे सर्वं करायत्तं भवतीति भावः ॥११८॥

**छन्दो भवेत् नभजजौ रयुतैर्मृदङ्गकम् ॥११९**

**छन्दो भवेदिति—नगण-भगणाभ्यां जगण-युगेन रगणेन च मृदङ्गकच्छन्दः ॥११९॥**

**चन्द्रकान्ताऽभिधरौ म्सौ यो यो विरमः स्वराष्टौ ॥१२०**

चन्द्रेति। रगणद्वयेन तगणेन यगणयुगलेन च चन्द्रकान्ताभिधा छन्दः, सप्तभिरष्टभिश्च तत्र यतिरित्यर्थः ॥१२०॥

**भवतः सजौ स-स-युतौ वृषभस्ततो यः ॥१२१**

भवत इति। सगण-जगणाभ्यां सगणद्वयेन यगणेन वृषभ च्छन्दः। 'ऋषभा'ख्यमेतदुदितं सजसाः सयौ चेत्। स ज स स य। ऋषभेति। चेद् यदि छन्दसः प्रतिपादं सश्च जश्च सश्च सजसाः सगण-जगण-सगणाः सश्च यश्च सयौ सगण-यगणौ च भवतः, तदा एतद् ऋषभाख्यम् ऋषभनामकं वृत्तं उदितं कथितं कविभिरिति शेषः ॥१२१॥

**छन्दो मञ्जर्य्यामत्र विशेषः—**

**ननतभर-कृताऽष्टस्वरैरुपमालिनी। न न त भ र। (१)**
**कथयन्ति 'मानसहंस' नाम सजौ ज्भराः। स ज ज भ र (२)**
**सगणैः शिववक्त्रभितैर्गदिता 'नलिनी'। स स स स स (३)**
**शंस 'निशिपालक'मिदं भजसनाश्च रः। भ ज स न र (४)**

शंसेति। यस्य प्रतिचरणं क्रमशः भश्च जश्च सश्च नश्च

भजसनाः भगण-जगण-सगण-नगणाः रः एको रगणश्च स्यात्, इदं तत् निशिपालकं नाम वृत्तं शंस कथय। (४)

( १६ )

**अथ षोड़शाक्षराऽष्टिः—यथा,**

**चित्रसंज्ञमीरितं समानिका पदद्वयन्तु ॥१२२**

षोड़शाक्षरेति—चित्रेति। गुरुलघुरगण-जगणा यत्र द्विः पठिता, स्तच्चित्र संज्ञच्छन्दः।

सम्प्रति षोड़शाक्षरपादं वृत्तं प्रदर्शयति—चित्रेत्यादिना। यस्य पादे समानिकायाः 'ग्लौ रजौ समानिका तु' इत्युक्त लक्षणस्य समानिका छन्दस इत्यर्थः। पदद्वयं द्वौ पादौ भवेदिति शेषः, यथा क्रमं ग-ल-र-ज-ग-ल-र-जा इति गणाः स्युरित्याशयः, तत् चित्र संज्ञं चित्र नामकं वृत्तम् ईरितं कथितं विद्वद्भिरिति शेषः। तु-कार पादपूरणे। अत्रेदमववेयम्—प्रमाणिका-समानिकयोर्गणतोऽभिन्नत्वेन पौर्वापर्य्यमात्रभेदात् प्रमाणिका घटिते पञ्चचामरे षोड़शाक्षरेषु लघुगुरुर्लघुर्गुरुरिति क्रमः, समानिका घटिते इह तु गुरुर्लघुगुरुर्लघुरिति। उदाहरणम्—

विद्रुमारुणाधरौष्ठशोभिवेणुवाद्यहृष्ट-
वल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग।
त्वां सदैव वासुदेवपुण्यलभ्य पादसेव-
वन्यपुष्पचित्रकेशसंस्मरामि गोपवेशः॥

विद्रुमेति। विद्रुमारुणः प्रवालवल्लोहित योऽधरौष्ठः, तस्मिन् शोभितुं शीलं यस्य स विद्रुमारुणाधरौष्ठशोभी, तादृशो यो वेणुः वंशी, तस्य वाद्येन हृष्टानामुल्लसितानां वल्लवीजनानां गोपवधूनाम्, अङ्गसङ्गेन शरीरसम्पर्केण जात उद्गतः मुग्धः मनोज्ञाः कण्टको

रोमाञ्च येषु तादृशानि अङ्गानि अवयवा यस्य तत् सम्बुद्धौ हे विद्रुमारुणाधरौष्ठशोभिवेणुवाद्यहृष्टवल्लवीजनाङ्गसङ्गजात-मुग्धकण्ट-काङ्ग, तथा पुण्येन सुकृतेन लभ्य लब्धुं शक्या पादसेवा चरणाराधना यस्य तत् सम्बुद्धौ पुण्यलभ्यपादसेव, वन्यपुष्पैः वनजातकुसुमैः चित्राः शोभिताः केशा यस्य तत् सम्बुद्धौ हे वन्यपुष्पचित्रकेश, गोपस्य वेश इव वेशो यस्य तत् सम्बुद्धौ हे गोपवेश, हे वासुदेव, वसुदेवतनय, सदा निरन्तरं त्वामेव संस्मरामि सम्यक् चिन्तयामि अहमिति शेषः ॥१२२॥

**प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम् ॥१२३**

प्रमाणिकेति। जगण-लघुगुरवो यत्र द्वि पठचन्ते, तत् पञ्चचामर छन्दो द्वितीयम्। यस्य प्रतिपादे प्रमाणिकायाः 'प्रमाणिका जरौ लगौ' इति प्रागुक्त लक्षणस्य प्रमाणिका छन्दस इत्यर्थः, पदद्वयं चरणद्वयं भवति। युग्माक्षराणि दीर्घाण्ययुग्मानि च लघूनि स्युरिति भावः। तत् पञ्चचामरं नाम वृत्तं वदन्ति कथयन्ति कवय इति शेषः। उदाहरणम्—

सुरद्रुममूलमण्डपे विचित्ररत्नमण्डिते
लसद्वितानभूषिते सलीलविभ्रमा लसम्।
सुराङ्गनाभवल्लवीकर-प्रपञ्चचामर-
स्फुरत्समीरवीजितं सदाऽच्युतं भजामि तम्॥

प्राणीसमूह, तत्र यानि चामराणि बालव्यजनानि, तेभ्यः स्फुरता सञ्चरता समीरणेन वायुना वीजितम् अतएव सलीलः शृङ्गारचेष्टायुक्तः यो विभ्रमः विलास, तेन अलसं मन्थरं तम् अच्युतं कृष्णं सदा अनिशं भजामि अहं सेवे इत्यर्थः ॥१२३॥

**भ्रत्रिनगैः स्वरात् खं ऋषभ-गजविलसितम् ॥१२४**

भ्रत्रीति। भगण-रगणाभ्यां नगण-त्रिकेण गुरुणा च ऋषभ

गजविलसित छन्दः, स्वरात् सप्तमवर्णात् खं यतिर्भवति। यस्य प्रतिचरणं भ् च रश्च त्रिनं च गश्च भ्रत्रिनगाः, तैः यथाक्रममवस्थितै-र्भगण-रगण-नगणत्रय-गगणैरित्यर्थः, घटितं भवतीति शेषः। यत्र च स्वरात् सप्तमाक्षरात् परमित्यर्थः, खं विरामः स्यात्, तद् ऋषभगजविलसितं नाम वृत्तं भवति। उदाहरणम्—

यो हरिरुच्चखान-खरतरनखशिखरै,-
　　दुर्जयदैत्यसिंहसुविकट-हृदयतटम्।
किं न्विह चित्रमेष यदखिलमपहृतवान्,
　　कंसनिदेशदृप्यदृषभगजविलसितम्॥

य इति। यः हरिः नरसिंहरूपी सन्, खरतरनखशिखरैः अतितीक्ष्णनखाग्रभागैः दुर्जयः दुःखेन जेतुं शक्यः, यो दैत्यसिंहः दैत्यश्रेष्ठः हिरण्यकशिपु इत्यर्थः, तस्य सुविकटम् अत्यन्तविपुलं हृदयतटं वक्षस्थलम् उच्चखान विददार, एष सः, कंसनिदेशेन कंसाज्ञया दृप्यतोः गर्वमावहतोः, दृप्तयोरिति यावत्। ऋषभगजयोः गृहीत वृषरूपस्यारिष्टासुरस्य कुवलयापीड़-गजस्य चेत्यर्थः, अखिलं विलसितं चेष्टितम् अपहृतवान् व्यर्थं चकार इति यत्, तदिह अस्मिन् हरौ किं नु चित्रम्? असाध्यं साधयतो अल्पमात्र-साधनमकिञ्चित्करमेवेति भावः॥१२४॥

**भात् समतनगैरष्टच्छेदे स्यादिह चकिता॥१२५**

भात्सेति। भगण-सगण-मगणैस्तगण-नगण-गुरुभिश्च चकिता छन्दः। अष्टभिस्तत्र छेदो यतिरित्यर्थः। अर्थात् इह अस्मिन् षोड़शाक्षरपादवृत्तप्रस्तावे यस्याः प्रतिपादं भात् भगणात् परैरित्यर्थः, समतनगैः सगण-मगण-तगण-नगण-गगणैः घटितं स्यादिति शेषः। अष्टच्छेदे अष्टाभिरष्टाभिरक्षरैर्विरामे सति सा चकिता तदाख्यकं वृत्तं स्यात्। उदाहरणम्—

दुर्जयदनुजश्रेणीदुश्चेष्टाशतचकिता,
यद्भुजपरिघत्राता याता साध्वसविगमम्।
दीव्यति दिविषन्माला शश्वन्नन्दनविपिने
गच्छत शरणं कृष्णं तं भीता भव रिपुतः॥

दुर्जयेति। दुर्जयानां दुःखेन जेतुं कश्यानां दुर्धर्षाणामिति यावत्, दनुजानां दानवानां या श्रेणी संघः, तस्या दुश्चेष्टाशतै- र्बहुभिर्दुराचारैरित्यर्थः। चकिता भीता दिविषदां माला दिविषन्माला देवसमूहः, यद्भुजपरिघत्राता यस्य भुज एव परिघो लौहास्त्रविशेषः, तेन त्राता रक्षिता, अतएव साध्वसस्य विगमं साध्वसविगमं निर्भयमित्यर्थः। याता प्राप्तवती सती शश्वत् निरन्तरं नन्दनविपिने नन्दनकानने दिव्यति क्रीड़ति, भवः संसार एव रिपुः, तस्माद्भीता यूयं तं कृष्णं शरणं गच्छत रक्षकरूपेण आश्रयत 'शरणं गृहरक्षित्रोरित्यमरः'॥१२५॥

**म्भौ नो म्नौ गो मदनललिता वेदैः षड्तुभिः ॥१२६**

म्भौ न इति। मगण-भगण-नगणर्मगण-नगण-गुरुभिश्च मदनललिता छन्दः, चतुर्भिः, षड्भिश्च तत्र यतिरित्यर्थः। अर्थात् यस्याः पादे म् च भश्च म्भौ मगण-भगणौ, नः एको नगणः, म् च नश्च म्नौ मगण-नगणौ गः एको गगणश्च स्यादित्यर्थः। सा वेदैश्चतुर्भिः षट्च ऋतवश्च षड्तवः, ते षड्भिश्चाक्षरैरित्यर्थः। छिन्नेति शेषः, मदनललिता तत् संज्ञकं वृत्तं भवति। उदाहरणम्–

बिभ्रष्टस्रग्गलितचिकुरा धौताधरपुटा,
ग्लात्पत्रावलिकुचतटोच्छ्वासोर्मितरला।
राधात्यर्थं मदनललितान्दोलालसवपुः,
कंसाराते रतिरसमहो चक्रेऽति चटुलम्॥

बिभ्रविति। अत्यर्थं अतिमात्रं यथा स्यात्तथा मदनललिते

कामबिलासेन य आन्दोलः निरन्तरक्षोभः, तेन अलसं मन्थरं वपुः शरीरं यस्याः सा, अतएव बिभ्रष्टा विशेषेण पतिता स्रक् माला यस्याः सा, गलिता इतस्ततो विक्षिप्ताः चिकुराः केशा यस्यास्तादृशी धौतं क्षालितं निर्मृष्ट रागीकृतमिति यावत्, पत्रावलिः पत्ररचना ययोस्तादृशे कुचतटे यस्याः सा, किञ्च उच्छ्वासोर्मिभिर्निश्वास-तरङ्गैरूपातिचञ्चलनिश्वासैरित्यर्थः, तरला चञ्चला राधा राधिका कंसारातेः कृष्णस्य रतिरसं सुरतानुरागम् अतिचटुलं चक्रे, पुनरपि इत्यनुरागं वर्धितवतीत्यर्थः ॥१२६॥

**न-ज-र-भ-भेन गेन च स्यात् मणिकल्पलता ॥१२७**

नजरभेति । नगण-जगण-रगणैर्भगणद्वयेन गुरुणा च मणिकल्पलता छन्दः। अर्थात् यस्य प्रतिचरणं नश्च जश्च रश्च भश्च भश्च तेषां समाहारः नजरभभं तेन, तथोक्तैर्गणैरित्यर्थः, तथा तेन एकेन गगणेन च घटितमिति शेषः स्यात्। यत्र प्रतिपादं पञ्चम-सप्तम-नवम-दशम-त्रयोदश-षोड़शाक्षराणि विहाय सर्वाणि लघूनि भवेयुरित्याशयः। सा मणिकल्पलता नाम वृत्तं स्यात् ॥१२७

**यमौ नः स्रौ गश्चेत् प्रवरललितं नाम वृत्तम् ॥१२८**

यमौ न इति। यगण-मगण-नगणैः सगण-रगण-गुरुभिश्च प्रवरललितं छन्दः। यस्य प्रतिचरणं यश्च मश्च यमौ यगण-मगणौ, नः एको नगणः, स् च रश्च स्रौ सगण-रगणौ, गः एको गगणश्च स्युरित्यर्थः, तत् प्रवरललितं नाम वृत्तं भवति। उदाहरणम्—

भुजोपक्षेपः शून्यं चलवलयझङ्कारयुक्तो
मुधा पादन्यासः प्रकटिततुलाकोटिनादः।
स्मितं वक्त्रेऽकस्माद् दृशि पटुकटाक्षोर्मिलीला
हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम् ॥

भुजेति। शून्ये वियति चलाश्चञ्चला ये वलयाः करभूषणानि

तेषां झङ्कारेण, झङ्कार ध्वनिना युक्तः भुजोपक्षेपः बाहुप्रसारणम्, तथा मुग्धा वृथा अकरुणमिति यावत्, प्रकटित व्यक्तः तुला कोटीनां नूपुराणां नादो ध्वनिर्यत्र तादृशः, तादृश पादन्यासश्चरणविक्षेपः किञ्च, अकस्मात् सहसा वक्त्रे मुखे स्थितम् ईषद्धासः, दृशि नयने पटोर्निपुणस्य कटाक्षस्य अपाङ्गदर्शनस्य या ऊर्मिः समूहः परम्परेति यावत्, तस्य लीला विलासः, ईदृग् उक्तप्रकारं वल्लवीनां गोपवधूनां प्रवर ललितं अत्यन्तश्रृङ्गारचेष्टाविशेषः हरौ श्रीकृष्णविषये जीयात् सर्वोत्कर्षेण वर्त्ततामित्यर्थः ॥१२८॥

**न-ज-भ-ज-रैः सदा भवति वाणिनी ग-युक्तैः ॥१२९**

नजभजरेति। नगण-जगणाभ्यां भगण-जगणाभ्यां रगण-गुरुभ्याञ्च वाणिनी छन्दः। न ज भ ज र। यदा यदि छन्दसः प्रतिपादं युक्तैरन्ते एकेन गुरुणोपेतैः, नजभजरैर्गणैः घटितं भवतीति शेषः। तदा वाणिनी नाम वृत्तं भवति। अत्र पादान्ते यतिरिति केचित्। उदाहरणम्—

स्फुरतु ममाऽऽननेऽद्य ननु वाणि नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम्।
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम्॥

स्फुरत्विति। ननु वाणि हे भारति, अद्य सम्प्रति तव चरणप्रसादस्य चरणसेवाजनितसन्तोषस्य यः परिपाकः फलं तस्मात्, मम आनने मुखे नीतिरम्यं नीतिमनोहरं कवित्वं सततं निरन्तरं स्फुरतु आविर्भवतु। येन स्वरचितैः स्वयं ग्रथितैः स्तवैः स्तुतिवाक्यैरहं नित्यम् अनिशम्, भव एव जलराशिः समुद्रः तस्माद् यत् पारकरणं तत्र क्षमं समर्थम्, मुकुं मुक्तिं ददातीति तं मुक्तिदातारं कृष्णं स्तवानि कीर्त्तयानि ॥१२९॥

**द्विगुणित-वसुलघुभिरचलधृतिरिह ।।१३०**

द्विगुणेति । यत्र षोड़शलघवः स्युस्तदचलधृतिच्छन्दः । इह अस्मिन् षोड़शाक्षरप्रस्तावे यस्य प्रतिपादं द्विगुणिता द्विरावृत्ती-कृता ये वसवः अष्टौ ते लघवो ह्रस्वा येषु तैः षोड़शभिर्लघ्वक्षरै-रित्यर्थः । घटितं भवतीति शेषः । तत् अचलधृतिस्तन्नामकं वृत्तं भवति । उदाहरणम्—

तरणिदुहितृतटरुचिरतरवसति-
रमरमुनिमुखजनविहितनुतिरिह ।
मुररिपुरभिनवजलधररुचितनु-
रचलधृतिरुदयति सुकृतिहृदि खलु ॥

तरणीति । तरणिदुहितुः सूर्य्यतनयाया यमुनाया इत्यर्थः, तटे तीरदेशे रुचिरतरा अत्यन्तमनोहरा वसतिर्वासगृहं यस्य तादृशः अमराश्च ते मुनयश्च अमरमुनयो देवर्षयः, ते मुखानि आदयो येषां तैः तथाभूतैर्जनैः विहिता कृता नुतिः स्तुतिर्यस्य तथाभूतः, देवर्षिमानवैर्निरन्तरं स्तूयमान इत्यर्थः । अभिनव-जलधरस्य रुचिरिवरुचिर्यस्याः तादृशी तनुः शरीरं यस्य स नवीनमेघकान्तिरित्यर्थः । तथा न चला अचला स्थिरा इत्यर्थः । धृति सन्तोषो यस्य तादृशः मुररिपुः कृष्णः, इह अस्मिन् जगति सुकृतमेषामस्ति इति सुकृतिनः, तेषां सुकृतिनां पुण्यवतां हृदि खलु हृदय एव उदयति आविर्भवति, कृष्णं पुण्यवन्त एव साक्षात् कर्त्तुं प्रभवन्तीति भावः ।।१३०।।

**पञ्च-भकावकृताऽश्वगतिर्यदि रत्नगुरुः ।।१३१** भ भ भ भ भ

पञ्च भेति । यत्र पञ्चभगण-गुरुश्च स्युः तदश्वच्छन्दः । या काचिद् वृत्तिः यदि पञ्चभकारयुता पञ्चभिर्भगणैरन्विता, तथा

अन्त्यः षोड़शवर्ण इत्यर्थः, गुरुर्दीर्घो यस्यां तादृशी च स्यादित्यर्थः। प्रतिचरणं चेत् प्रथम-चतुर्थ-सप्तम-दशम-त्रयोदश-षोड़शाक्षराणि दीर्घाणि शिष्टानि लघूनि स्युरिति भावः। तदा सा अश्वगतिर्नाम भवेत् ॥१३१॥

**गरुड़रुतं नजौ भजतगा यदा स्युस्तदा ॥१३२**

गरुड़ेति। नगण-जगणौ भगण-जगणौ तगण-गुरू च यत्र स्यातां, तद् गरुड़रुतच्छन्दः। अर्थात् यदा यदि छन्दसः प्रतिचरणं नश्च जश्च नजौ नगण-जगणौ, भश्च जश्च तश्च गश्च भजतगा भगण-जगण-तगण-गगणाश्च स्युरित्यर्थः। तदा गरुड़रुतं नाम वृत्तं भवति। उदाहरणम्—

अमरमयूरमानसमुदे पयोदध्वनि-
　　गरुड़रुतं सुरारिभुजगेन्द्रसन्त्रासने।
धरणिभरावतारविधिडिण्डिमाड़म्बरः
　　स जयति कंसरङ्गभुवि सिंहनादो हरेः॥

अमरेति। इह परत्र स इति प्रयोगादत्र य इत्यध्याहार्य्यम्, यत्र दोरेकसम्बन्धात् यः अमराः देवा एव मयूराः कलापिनः, तेषां यन् मानसं चित्तं तस्य मुदे उल्लासाय पयोदध्वनिः मेघगर्जनरूपः, तथा सुराणां देवानां ते अरयः असुरास्त एव भुजगेन्द्राः सर्पश्रेष्ठाः तेषां सन्त्रासेन त्रासोत्पादने गरुड़रुतं गरुड़गर्जनस्वरूपः, किञ्च धरणेः पृथिव्या भरावतारणविधौ भारहरणकार्ये डिण्डिमाड़म्बरः डिण्डिमध्वनिस्वरूपः, स तादृशः हरेः कृष्णस्य सिंहनादः कंसरङ्गभूमि कंसस्य युद्धक्षेत्रे इत्यर्थः, जयति सर्वोत्कर्षेण वर्त्तते ॥१३२॥

**अवशिष्टानि छन्दांसि छन्दोमञ्जर्य्यां सन्ति—**

**संकथिता भरौ नरनगाश्च 'धीरललिता' (१)**

यस्मिन् सर्वे गा राजन्ते 'ब्रह्मा'द्यं तद् रूपं नाम।(२)
ग ग ग ग ग ग ग ग ग ग ग ग ग ग ग ग

भ र य न न ग
भो रयना नगौ च यस्य 'वरयुवति'रियम् । (३)

तो नो भ-त-य-गकारयुतश्चेदिह 'बाला'ख्या (४)

(१७)

सप्तदशाक्षराऽत्यष्टिः—यथा,

**रसैरुद्रैश्छिन्ना यमनसभला गः 'शिखरिणी' ॥१३३**

सप्तदशाक्षरेति—रसै रुद्रैरिति। यगण-मगण-नगणैः सगण-भगणाभ्यां लघुगुरुभ्यश्च शिखरिणी छन्दः। षड्भिरेकादशभिश्च तत्र यतिरित्यर्थः। अर्थात् यस्य प्रतिचरणं क्रमशः यमनसभला गणा गः एको मगणश्च स्यात्, सा रसैः षड्भिः रुद्रैरेकादशभिश्चाक्षरैरित्यर्थः। छिन्ना यतिमती सती शिखरिणी नाम वृत्तं भवति। उदाहरणम्—

करादस्य भ्रष्टे ननु शिखरिणी दृश्यति शिशो-
विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः।
इति त्रस्यद्गोपानुचितनिभृतालापजनितं
स्मितं बिभ्रद्देवो जगदवतु गोवर्धनधरः॥

करेति। ननु इति सम्बोधनसूचकमव्ययम्। हे गोपाः, ईदृशी एवम्भूते भास्वतीत्यर्थः। शिखरिणि गोवर्द्धनपर्वते अतिशिशोरतिबालस्य अस्य कृष्णस्य कराद् हस्ताद् भ्रष्टे पतिते सति, सत्यं ध्रुवमेव विलीना निष्पिष्टा स्मो भवामः भविष्याम इत्यर्थः। अधःस्था वयमिति शेषः। तत् अतएव अखिलैः

सर्वैरस्माभिः नियतम् अवश्यम् अवधेयं सावहितैर्भवितव्यम्, इति उक्त प्रकारेण त्रस्यताम् उद्विजमानानां गोपानाम् अनुचितैरयुक्तै निभृतैः गूढैः आलापः परस्परसंलापैः जनितम् उत्पन्नं स्मितम् ईषद्धासं बिभ्रत् कुर्वाणः, धरतीति धरः, पच्याद्यच् गोवर्द्धनस्य धरः गोवर्द्धनधरः देवः कृष्णः जगद् विश्वम् अवतु रक्षतु ॥१३३॥

**दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥१३४**

**भ र न भ न ल ग।**

दिङ्मुनीति । भगण-रगण-नगण-भगणैर्नगण-लघुगुरुभिश्च वंशपत्रपतितं छन्दः। दशभिः सप्तभिश्च तत्र यतिः। दिङ् मुनीति लुप्तविभक्तिको निर्द्देशः। अर्थात् यस्य प्रतिपादं भश्च रश्च नश्च भश्च नश्च लश्च गश्च तैः, तथोक्तैर्गणैः घटितं भवतीति शेषः। दिङ्मुनि इति लुप्ततृतीया बहुवचनान्तं पदम्, दशभिः सप्तभिश्चाक्षरैरित्यर्थः, छिन्नमिति शेषः, तत् वंशपत्रपतितं नाम वृत्तं भवति। उदाहरणम्—

नूतनवंशपत्रपतितं रजनिजललवं
पश्य मुकुन्दमौक्तिकमिवोत्तममरकतगम्।
एष च तं चकोरनिकरः प्रपिबति मुदितो
वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥

हे मुकुन्द कृष्ण ! नूतनवंशपत्रेषु नवीनवेणुपर्णेषु पतितं रजनिजललवं निशाशिशिरकणम् उत्तममरकतगं श्रेष्ठमरकतमयपात्रगतमित्यर्थः। मौक्तिकं मुक्ताफलमिव पश्य अवलोकय। एष चकोरनिकरश्चकोरसमूहश्च मुदितः सन्तोष्टः सन् तं रजनिजललवं चन्द्रकिरणैः वान्तम् उद्‌गीर्णम् अमृतकणम् अमृतबिन्दुम् अवेत्य विदित्वा इव प्रपिबति। एतदपि पश्येत्यन्वयः ॥१३४॥

**यदि भवतो नजौ भजजला गुरुर्नर्द्दटकम् ॥१३५**

**न ज भ ज ज ल ग ।**

यदीति। नगण-जगण-भगणा जगणद्वयं लघुगुरू च यत्र स्युः, तन् नर्द्दटकच्छन्दः। नर्कुटकमित्यन्ये। अर्थात् यदि चेत् छन्दसः प्रतिपादं आदौ नश्च जश्च नजौ नगण-जगणौ भवतः, तदनु च भश्च जश्च जश्च लश्च भजजलास्तथोक्ता गणाः, गुरु एको गगणश्च भवन्तीत्यर्थः। इह सौत्रत्वाद् गुरु इति नपुंसक-निर्देशः। तदा नर्द्दटकं नाम वृत्तं भवेत्। गाथाधिकारेऽस्य 'अवितथम्' इति पिङ्गलसम्मता संज्ञा। तत्र पादान्ते यतिरिति हलायुधः। केचित् 'नर्कुटकम्' 'मर्कटकम्' वाऽस्य नामेति, सप्तभिर्दशभिश्च यतिरिति सम्प्रदाय इति चाहुरित्यनुसन्धेयम्। इदं छन्दो भागवते दशमस्कन्धे वेदस्तुतौ दृश्यते। उदाहरणम्—

व्रजवनितावसन्तलतिकाविलसन्मधुपं
मधुमथनं प्रणम्रजनवाञ्छितकल्पतरुम्।
विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा
रुचिरपदावलीघटितनर्द्दटकेन कविः॥

व्रजेति। व्रजवनिता व्रजाङ्गना एव वसन्तलतिका वासन्त्यो लताः, तासु विससन् क्रीड़न् यो मधुपः भ्रमरः, तं तत् स्वरूप-मित्यर्थः। प्रणम्रजनानां भक्तानामित्यर्थः, वाञ्छितस्य अभिलषितस्य सम्बन्धे कल्पतरुं कल्पवृक्षस्य रूपं विभुम् ईशं मधुमथनं मधुसूदनं कृष्णमिति यावत्, सुकृती पुण्यवान् कोऽपि कविः मुदितेन सन्तुष्टेन हृदा चेतसा रुचितपदावलीभिरत्युत्कृष्ट-पदकदम्बैः घटितं रचितं यत् नर्दटकं तन्नामकच्छन्दविशेषः, तेन अभिनौति स्तौति ॥१३५॥

**हय-ऋतुसागरैर्यतियुतं वद कोकिलकम् ॥१३६**

हयेति। सप्तभिः षड्भिश्चतुर्भिश्च यतिश्चेत्तदा नर्द्दटकमेव कोकिलकं वद कथय। वन कोकिलमित्यन्ये। अर्थात् यदि प्रगुक्तं नर्द्दटकं हयऋतुसागरैः सप्तभिः षड्भिश्चतुर्भिश्चाक्षरैरित्यर्थः यतियुतं स्यात्, तदा कोकिलकं नाम वृत्तं कथ्यते। पिङ्गलाचार्या स्त्वत्र अष्टभिः पञ्चभिश्च यतिरित्याहुः। 'हयऋतु' इत्यत्र 'हिम ऋता'वित्यादिवत् सन्धौ पक्षे प्रकृतिभाव इति ज्ञेयम्। उदाहरणम्—

लसदरुणेक्षणं मधुरभाषणमोदकरं
मधुसमयागमे सरसकेलिभिरुल्लसितम्।
अलिललितद्युतिं रविसुतावनकोकिलकं
ननु कलयामि तं सखि सदा हृदि नन्दसुतम्।

लसदिति। ननु हे सखि! लसती शोभमाने अरुणे रक्ते ईक्षणे नयने यस्य तादृशम्, तथा मधुरं यद् भाषणम् आलापः तेन मोदकरमानन्दजनकम्, तथा मधुर्वसन्तः तस्य समागमे आविर्भावे सरसकेलिभिः मधुरविहारैः उल्लसितं सन्तुष्टम्, तथा अलिवत् ललिता मनोहरा द्युतिः कान्तिर्यस्य तं श्यामकलेवर मित्यर्थः। किञ्च, रविसुतावने यमुनाकूलस्थारण्ये कोकिलकं पिकस्वरूपं तं नन्दसुतं कृष्णं सदा हृदि मानसे कलयामि स्मरामि अहमिति शेषः ॥१३६॥

**जसौ जसयला वसुग्रहयतिस्तु पृथ्वी गुरुः ॥१३७**

जसाविति। यत्र जगण-सगणौ द्विः पठितौ यगण-लघुगुरवश्च ततः स्युः तत् पृथ्वी छन्दः। अष्टभिर्नवभिश्च यतिरित्यर्थः। अर्थात् यस्याः पादे क्रमशः जसौ जगण-सगणौ, जसयला जगण-सगण-यगण-लगणाः, गुरुरेको गगणश्च स्यादित्यर्थः। सा वसुभिरष्टाभि-र्ग्रहैर्नवभिश्चाक्षरैर्यतिर्विरामो यस्यां सा तादृशी सती पृथ्वी

तन्नामकं वृत्तं भवेत्। उदाहरणम्—

दुरन्तदनुजेश्वरप्रकरदुःस्थपृथ्वीभरं
जहार निजलीलया यदुकुलेऽवतीर्याऽऽशु यः।
स एष जगतां गतिर्दुरितभारमस्मादृशां
हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः॥

दुरन्तेति। यो यदुकुले यदुवंशे अवतीर्य आविर्भूय निज लीलया दुरन्तानां दुर्जयानां दनुजेश्वराणां दैत्येन्द्राणां प्रकरेण समूहेन दुःस्थायाः पीड़ितायाः पृथ्व्या धरण्या यो भरो भारस्तम् आशु झटिति जहार हृतवान्, जगतां त्रिभुवनस्य गतिः शरणं स एष हरिः कृष्णः स्तुति-स्मरण-चाटुभिः स्तव-ध्यान-प्रियोक्तिभिः तोषितः सन्तुष्टिं नीतः सन्, अस्मादृशाम् अतिलघूनमिति भावः। दुरितभारं पापसमूहं हरिष्यति नाशयिष्यति ॥१३७॥

**मन्दाक्रान्ताऽम्बुधिरसहयैर्म्भौ भनौ तौ ग युग्मम् ॥१३८**

मन्देति। यत्र भगण-भगण-नगणास्तगणयुगं गुरुयुगञ्च स्युः, तन्मन्दाक्रान्ता छन्दः। चतुर्भिः षड्भिः सप्तभिश्च तत्र यतिरित्यर्थः। अर्थात् यस्याः प्रतिपादं क्रमशः म एको मगणः, भश्च नश्च भनौ भगण-नगणौ, गौ द्वौ गगणौ, य-युग्मं, यगणद्वयञ्च भवतीति शेषः। अम्बधयश्च रसाश्च नगाश्चेति अम्बुधिरसनगाः, तैर्यथाक्रमं चतुर्भिः षड्भिः सप्तभिश्चाक्षरैरित्यर्थः। विच्छिन्नेति शेषः, सा मन्दाक्रान्ता तन्नामकं वृत्तं भवति। उदाहरणम्—

प्रेमालापैः प्रियवितरणैः प्रीणिता क्रीड़नाद्यै-
र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला।
एवं शिक्षावचनसुधया राधिकायाः सखीनां
प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः॥

प्रेमेति। प्रेम्णा स्नेहेन ये आलापाः सम्भाषणानि तैः

प्रियवितरणैरभिलषितवस्तुप्रदानैः, क्रीड़नाद्यैः क्रीड़ोपयोगिकन्दुकादिद्रव्यविशेषैस्तत्प्रदानैश्चेत्यर्थः। प्रीणिता कृतसन्तोषा, अतएव तदनु तादृशसन्तोषोत्पादनात् परमित्यर्थः, मन्दं यथा स्यात्तथा आक्रान्ता आकृष्टा सती बाला बालिका नियतं निश्चितमेव वश्यताम् अधीनताम् एति प्राप्नोति। एवम् उक्त प्रकारेण राधिकायाः सम्बन्धे सखीनां शिक्षावचनसुधया उपदेशकथामृतेन प्रीतः आनन्दितः, अतएव स्मितेन ईषद्धासेन सुवदनः शोभनमुखः देवकीनन्दनः कृष्णः नः अस्मान् अवतु पायात् ॥१३८॥

**भाराक्रान्ता मभनरसला गुरुः श्रुति-षड़्हयैः ॥१३९**

भारेति। मगण-भगण-नगणैः रगण-सगणाभ्यां लघुगुरुभ्याञ्च भाराक्रान्ता छन्दः। चतुर्भिः षड़्भिः सप्तभिश्च तत्र यतिः। म भ न र स ल ग। अर्थात् यस्याः प्रतिपादे यथाक्रमं मश्च भश्च नश्च रश्च सश्च लश्चेति मभनरसलास्तथोक्ता गणाः गुरुरेको गगणाश्च भवेदित्यर्थः। श्रुतयश्च षट् च हयाश्च श्रुतिषड़्हयाः तैश्चतुर्भिः सप्तभिश्चाक्षरैरित्यर्थः, विच्छिन्नेति शेषः। सा भाराक्रान्ता नाम वृत्तं भवति। उदाहरणम्—

भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात्
कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति।
इत्यावृण्वञ्जयति जलदस्वनाकुलवल्लवी
संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः॥

भारेति। हरिः कृष्णः गुरुं पितरं विलोक्य दृष्ट्वा जलदस्वनेन मेघगम्भीरध्वनिना आकुलानां भीतानां वल्लवीनां गोपवधूनां संश्लेषोत्थम् आलिङ्गनजातं स्मरविलसितं कम्पस्वेदादिरूपमनङ्गविकारं 'गिरीन्द्रविधारणाद् गोवर्द्धनगिरिधारणात् मम इयं तनुः भाराक्रान्ता भारवती सती कम्पं धत्ते कम्पते' इत्यर्थः। तथा

श्रमजलकणं पर्वतधारणपरिश्रमजनितस्वेदबिन्दुं परिमुञ्चति त्यजति ननु कारणान्तरादिति भावः। इति उक्त प्रकारेण आवृण्वन् गोपयन् सन् जयति सर्वोत्कर्षेण वर्त्तते ॥१३९॥

**नसभरसला गः षड्वेदैर्हरिणी मता ॥१४०**

नससेति। यत्र नगण-सगण-मगण-रगण-सगण लघुगुरवश्च भवन्ति, तत् हरिणी छन्दः। षड्भिश्चतुर्भिः सप्तभिश्च यतिः। अर्थात् यस्याः पादे यथाक्रमं नसमरसला नगण-सगण-मगण-रगण-सगण-लगणा गः एको गगणश्च स्युरित्यर्थः, षट् च वेदाश्च षड्वेदाः, तैः षड्भिश्चतुर्भिरित्यर्थः। हयैः सप्तभिश्चाक्षरैश्च यतिमतीति शेषः। सा हरिणी तत्संज्ञकं वृत्तं मता कथिता कविभिरिति शेषः। केषाञ्चिन्मतेऽस्या 'ऋषभविलसित'मिति संज्ञा। उदाहरणम्—

व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणाद्
व्रजमृगदृशां सन्देहस्योल्लासन्नयनश्रियम्।
यदयमनिशंदूर्वाश्यामे मुरारिकलेवरे
व्यकिरदधिकं बद्धाकाङ्क्षे विलोलविलोचम् ॥

व्यधितेति। स प्रसिद्धः विधिर्विधाता ध्रुवं निश्चितमेव हरिणीगणाद् मृगीसमूहात् नेत्रं नयनशोभामित्यर्थः, नीत्वा संगृह्य व्रजमृगदृशां व्रजरमणीनां सन्दोहस्य समूहस्य उल्लसन्ती स्फुरन्ती वा, नयनश्रीर्नेत्रशोभा, तां व्यधित निर्मितवानित्यर्थः। यद् यतः अनिशं निरन्तरं अयं व्रजमृगीदृशां सन्दोहः समूहः दूर्वाश्यामे दूर्वादलश्यामले, बद्धा आकाङ्क्षा अनुरागो यत्र तस्मिन् अतिप्रिये इति भावः। मुरारिकलेवरे कृष्णशरीरे विलोलं चञ्चलं सतृष्णत्वादिभावः। यद् विलोचनं नयनं तद् अधिकं यथा स्यात् तथा व्यकिरत् पतितवानित्यर्थः ॥१४०॥

**वेदर्त्वश्वैर्म्भनम्यला गश्चेदा 'हारिणी' ॥१४१**

वेदेति। यत्र मगण-भगण-नगण-मगण-यगणा लघुगुरू च भवन्ति, चतुर्भिः षड्भिः सप्तभिश्च यतिस्तत् हारिणी छन्दः। चेद् यदि छन्दसः प्रतिचरणं क्रमशः मश्च भश्च नश्च मश्च लश्च ते तथोक्ता गणाः, गः एको गगणश्च स्यात्, तथा वेदाश्च ऋतवश्च अश्वाश्च वेदर्त्वश्वाः, तैश्चतुर्भिः षड्भिः सप्तभिश्चाक्षरैरित्यर्थः, यतिर्भवेदिति शेषः। तदा हारिणी तदाख्यकं वृत्तं भवेत्। उदाहरणम्—

यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने
राग: स्वीयोऽधरकिसलये लाक्षारसारञ्जनम्।
गौरीकान्तिः प्रकृतिरुचिरा-राधाङ्गरागच्छटा
सा कंसारेरजनि न कथं राधा-मनोहारिणी॥

यस्या इति। यस्या राधिकायाः श्रिया कान्त्या शालेते शोभते इति श्रीशालिनी, मनोहरे इत्यर्थः, लोचने नेत्रे एव नित्यं निरन्तरं कुवलये आकर्णविस्तृतत्वात् कर्णोत्पलस्वरूपे इत्यर्थः। तथा अधरकिसलये अधरपल्लवे स्वीयः स्वकीयः अकृत्रिम इति भावः। रागः आरुण्यम्, एवं लाक्षारसस्य अलक्तकद्रवस्य आरञ्जनं सम्यक् विलेपनम्, किञ्च, प्रकृतिरुचिरा स्वभावमनोज्ञा गौरी गौरवर्णाकान्तिरङ्गशोभैव रम्याङ्गरागस्य मनोहरकुङ्कुमादेः छटा द्युतिः, सा राधा कंसारेः कृष्णस्य मनोहारिणी हृदयग्राहिणी कथं न अजनि जाता? अपितु जातैवेत्यर्थः॥१४१॥

**समदविलासिनी नजभजैर्म्लगैरिन शरैः ॥१४२**

समदेति। यत्र नगण-जगण-भगण-जगणा भगणा लघुगुरुश्च भवन्ति। द्वादशभिः पञ्चभिश्च यति स्तत् समदविलासिनी छन्दः॥१४२॥

**ससजा भजगा गुरुर्द्रुता भुवि दशाश्व-भिन्ना ॥१४३**

ससेति। यत्र सगणद्वयं जगण-भगण-जगणा गुरू च भवन्ति तद् द्रुता छन्दः। दशभिः सप्तभिश्च तत्र यतिः। अर्थात् यस्याः प्रतिचरणं भजौ भगण-जगणौ परौ परवर्त्तिनी येभ्यः, तैस्तादृशैः ससजैः सगण-सगण-जगणैः, तथा गुरुभ्याम् अन्त्याभ्यां द्वाभ्यां गगणाभ्याञ्च घटितं भवतीति शेषः। यत्र तृतीय-षष्ठाष्टम-दशम-चतुर्दश-षोड़श-सप्तदशाक्षराणि विहाय सर्वाणि लघूनि स्युरित्याशयः, सा अतिशायिनी नाम वृत्तं मता कथिता विद्वद्भिरिति शेषः। 'ससजै'रतिशायिनी' मता भजपरैर्गुरुभ्याम।' ग्रन्थकृताऽत्र यति-र्नोक्ता। पिङ्गलाचार्य्यस्तु इमां गाथाधिकारेऽन्तर्भाव्य दशभिः सप्तभिश्चात्र यतिरुक्तम्। मल्लिनाथोऽपि शिशुपालवधस्याष्टम-सर्गीयैकसप्ततितमश्लोकस्य व्याख्यायां—'ससजा भजतोऽतिशायिनी भवति गौ दिगश्वैः' इति लक्षणं प्रदर्श्य पिङ्गलोक्तयतिनियममेवा-ङ्गीकृतवानित्यनुसन्धेयम्। अस्याः पिङ्गलोक्तमुदाहरणं तु—

इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन
　　　　श्रियमाप्तवतीऽतिशायिनी मपमलाङ्गभासः।
अवलोक्य तदैव यादवानपरवारिराशेः
　　　　शिशिरेतररोचिषाऽप्यपां ततिषु मङ्क्तुमीषे॥

(पिङ्ग० ८ अ० १२ सू०) ॥१४३॥

**अवशिष्टानि छन्दांसि छन्दो मञ्जर्य्यां वर्त्तन्ते—**

**रसयुगहययुङ् नौ म्रौ सो लगौ हि यदा 'हरिः'।**
**न न म र स ल ग।**

रसेति। यदा यदि वृत्तस्य प्रतिपादे क्रमशो नौ द्वौ नगणौ, म् च रश्च म्रौ मगण-रगणौ, सः सगणः, लश्च गश्च लगण-गगणौ

च स्यातामित्यर्थः। तदा रसाश्च युगानि च हयाश्च तान् युनक्तीति रसयुगहययुक् षड्भिश्चतुर्भिः सप्तभिश्चक्षरैर्विच्छिन्न इति भावः। हरिस्तदाख्यं वृत्तं भवेत्। (१)

**भवेत् 'कान्ता' युगरसहयैर्यभौ नरसा लगौ। य भ न र स ल ग**

भवेदिति। यस्याः पादे यश्च मश्च यमौ यगण-मगणौ, नश्च रश्च सश्च नरसा नगण-रगण-सगणाः, लश्च गश्च लगौ लगण-गगणौ च स्यातामित्यर्थः। युगरसहयैश्चतुर्भिः षड्भिः सप्तभिश्चाक्षरैरित्यर्थः, विच्छिन्नेति शेषः, सा कान्ता तद् संज्ञकं वृत्तं भवेत्। (२)

**अवेहि 'पञ्चचामरं' जरौ जरौ जगौ लघुश्च।**

**ज र ज र ज ग ल।**

अवेहीति। यस्य पादे क्रमेण जरौ जरौ जगौ लघुरेको लगणश्च स्यादिति शेषः, तत् पञ्चचामरं नाम वृत्तम् अवेहि जानीहि। (३)

## (१८)

**अष्टादशाक्षरा धृतिः—यथा,**

**स्याद् भूतर्त्वश्वैः 'कुसुमलतावेल्लिता' म्तौ नयौ यौ ॥१४४**

**म त न य य य।**

अष्टादशाक्षरेति—स्याद् भूतेति। यत्र मगण-तगण-नगण-यगणाश्च त्रयः स्युस्तत् कुसुमवेल्लिता छन्दः। पञ्चभिः सप्तभिश्च यत्र विच्छेदः स्यादित्यर्थः। अर्थात् यस्याः प्रतिपादं क्रमशः मश्च तश्च म्तौ मगण-तगणौ, नश्च यश्च नयौ नगण-यगणौ, यश्च यश्च यौ द्वौ यगणौ च स्यातामित्यर्थः। भूतानि च ऋतवश्च अश्वाश्च तैः भूतर्त्वश्वैः पञ्चभिः षड्भिः सप्तभिश्चाक्षरैरित्यर्थः।

विच्छिन्नेति शेषः, सा कुसुमितलतावेल्लिता नाम वृत्तं स्यात्।

उदाहरणम्—

क्रीड़त् कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यै-
　　र्वातैः खेलद्भिः कुसुमितलतावेल्लिता मन्दमन्दम्।
भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं
　　तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार॥

क्रीड़दिति। क्रीड़न्ति उद्वेल्लन्ति यानि कालिन्द्या यमुनायाः ललितलहरीणां मनोज्ञतरङ्गाणां वारीणि पयांसि, तैः सहेति शेषः, खेलद्भिः सञ्चरणशीलत्वात् क्रीड़द्भिरिव यमुनातरङ्गसंपृक्तैरिति भावः, दाक्षिणात्यैर्दक्षिणदिगभवैः वातैः समीरणैः मन्दमन्दं वेल्लिता चालिता, तथा भृङ्गावलीनां भ्रमरनिचयानां गीतैः गुञ्जनध्वनि-रूपगानैः, किञ्च, किसलयमेव करो हस्तः किसलयकरः, तस्य उल्लसितैः विलासैश्च लास्यलक्ष्मी नर्त्तनशोभा तन्वानां विस्तारयन्ती सती कुसुमिता चासौ लता चेति कुसुमितलतासञ्जात कुसुमावल्लीत्यर्थः। चक्रपाणेः कृष्णस्य चेतो मानसं रभसतरलं हर्षचपलं चकार कृतवती॥१४४॥

**नजभजरास्तु रेफसहिताः शिवैर्हयैर्नन्दनम्॥१४५**

**न ज भ ज र र।**

नजभेति। नजभजरैस्तु रेफसहितैः शिवहयैर्नन्दनम्। नगण-जगण-भगणा जगणो रगणद्वयञ्च यदि भवन्ति, एकादशभिः सप्तभिश्च यतिस्तदानन्दनश्छन्दः। अर्थात् यस्य प्रतिचरणं रेफ-सहितैरन्तस्थेनैकेन रगणेन युक्तैः नश्च जश्च भश्च जश्च रश्च तैर्नगण-जगण-भगण-जगण-रगणैरित्यर्थः, घटितं भवतीति शेषः। शिवैरेकादशभिः हयैः सप्तभिश्चाक्षरैरित्यर्थः, विच्छिन्नेति शेषः, तत् नन्दन नाम वृत्तं भवति। तु-कारोऽत्र पादपूरणे। उदाहरणम्—

तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं
मधुरिपुपादपङ्कजरजः सुपूतपृथ्वीतलम् ।
मुरहरचित्रचेष्टितकलाकलापसंस्मारकं
क्षितितलनन्दनं व्रजसखे सुखाय वृन्दावनम् ॥

तरणीति । हे सखे, तरणिसुतायाः कालिन्द्याः तरङ्गपवनैः वीचिसम्पृक्तवायुभिः सलीलं यथा स्यात्तथा, मन्दमन्दमित्यर्थः। आन्दोलितं वीजितम्, तथा मधुरिपोः कृष्णस्य यानि पादपङ्कजरजांसि चरणकमलपरागाः तैः सुपूतम्, अतिशयेन पवित्रं पृथ्वीतलं भूभागो यस्मिन् तत् तादृशम् । किञ्च, मुरहरस्य कृष्णस्य चित्रा मनोहराः या श्चेष्टितकलाः विलासव्यापाराः, तासां कलापकस्य समूहस्य संस्मारकं सम्यक् ज्ञापकं क्षितितलस्य पृथिव्याः नन्दनं नन्दनकाननस्वरूपं वृन्दावनं सुखाय सुखनिमित्तं सुखदायकमिति तत्रैव गच्छेति भावः ॥१४५॥

**इह ननरचतुष्कसृष्टन्तु 'नाराच' माचक्षते ॥१४६**

**न न र र र र।**

इह ननेति । नगणयुगलेन रगण-चतुष्केण च नाराचच्छन्दः। इह अस्मिन् ग्रन्थे यस्य प्रतिचरणं नश्च नश्च रचतुष्कं च तैः यथाक्रममवस्थितेन नगणद्वयेन चतुर्भिर्रगणैश्चेत्यत्यर्थः, सृष्टं रचितं भवतीति शेषः। इह नाराचं नाम वृत्तम् आचक्षते कथयन्ति, विद्वांस इति शेषः। मल्लिनाथस्तु शिशुपालबधस्थैकादशसर्गीय सप्तषष्टितमश्लोकव्याख्यायां 'यदिह नयुगलं ततो वेदरेफैर्महामालिनी'ति लक्षणे नाराचोक्तान् गणान् प्रदर्शयत् नाम चान्यदकथयद् इति तन्मते संज्ञाभेदमात्रमिदमित्यवगच्छामः। ग्रन्थकारोऽत्र यतिभावं नालक्षयत् । हलायुधः पुनर्दशभिरष्टभिश्चात्र यतिरित्यभिधायात्रत्यमुदाहरणीकृतं द्वितीयश्लोकमेवोदाहरण-

त्वेनोपन्यस्तत्वानित्यवसेयम्। अत्र तु-कारः पादपूर्त्तौ। उदाहरणम्—

दिनकरतनयातटीकानने चारुसञ्चारिणी
श्रवणनिकटकृष्टमेणेक्षणा कृष्ण राधा त्वयि।
ननु विकरति नेत्रनाराचमेषातिहृच्छेदनं
तदिह मदनविभ्रमोद्भ्रान्तचित्ताऽवधत्स्व द्रुतम् ॥

दिनकरेति। ननु इति सम्बोधनसूचकमव्ययम्। हे कृष्ण! दिनकरतनयाया यमुनायास्तटीकानने तीरस्थारण्ये, चारु मनोहरं यथा स्यात्तथा सञ्चारिणी विहारिणी, एणस्य ईक्षणे इव ईक्षणे यस्याः सा एणेक्षणा हरिणनयना एषा राधा राधिका, मदनविभ्रमेण कामविलासेन उद्भ्रान्तं चञ्चलं चित्तं यस्याः सा तादृशी सती, अतिहृच्छेदनम् अतिशयेन हृदयवेधनं श्रवणनिकटकृष्टम् आकर्णपूरितमित्यर्थः, नेत्रनाराचं नयनरूपास्त्रविशेषं त्वयि विकिरति विक्षिपति। तत् अतएव इह अस्मिन् विषये द्रुतम् अतित्वरितम् अवधत्स्व अवहितो भव ॥१४६॥

**दशवसुविरतिर्नं नौ रैश्चतुर्भिर्युतौ चेल्लता ॥१४७**

दशेति। दशभिरष्टभिश्च यति-कल्पने नाराच एव लता छन्दः ॥१४७॥

**त्र्यधिकदशयतिर्नं नौ रौ भवेतां ररौ तारका ॥१४८**

त्र्यधिकेति। त्रयोदशभिर्यति-कल्पने नाराच एव तारका छन्दः, इत्यर्थः ॥१४८॥

**मः सो जः सतसा दिनेशऋतुभिः शार्दूलललितम् ॥१४९**

मः सो ज इति। मगण-सगण-जगणाः, सगण-तगण-सगणाश्चात्र यत्र भवन्ति द्वादशभिः षड्भिश्च यत्र विश्रामस्तत् शार्दूलललित छन्दः। अर्थात् यस्य प्रतिचरणं क्रमेण—म एको

मगणः, स एकः सगणः, ज एको जगणः, तथा सतसाः सगण-तगण-सगणाश्च स्युः, दिनेशाश्च ऋतवश्च तैः दिनेशऋतुभिर्द्वादशभिः षड्भिश्चाक्षरैरित्यर्थः। विच्छिन्नमिति शेषः, तत् शार्दूलललितं नाम वृत्तं भवति। दिनेशऋतुभिरित्यत्र सन्धौ प्रकृतिभावस्तु प्रागुक्तप्रकारेण ज्ञेयः। उदाहरणम्—

कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं
यश्चक्रेक्षितिभारकारिषु दरं चैद्यप्रभृतिषु।
सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं
श्रेयो नः स तनोत्वपारमहिमालक्ष्मीप्रियतमः॥

कृत्वेति। यः कंसमृगे कंसरूपमृगे, शार्दूलललितं व्याघ्रवन्मनोहरं पराक्रमविधिं विक्रमव्यापारं कृत्वा विधाय, कंसं विनाश्येत्यर्थः। क्षितिभारकारिषु निरन्तरमुद्वेगजकत्वात् पृथीव्या भारस्वरूपेषु चैद्यप्रभृतिषु शिशुपालप्रमुखेषु राजषु इत्यर्थः। दरं त्रासं चक्रे समुत्पादितवान्। 'दर त्रासौ भीतिर्भीरित्यमरः।' देवनिवहे तु देवसमूहे पुनः परमम् अत्यन्तं सन्तोषम्, आनन्दं चक्रे त्रैलोक्यशरणं त्रिभुवनपालकः अपारमहिमा असीममाहात्म्यः स लक्ष्मीप्रियतमः कृष्णः नः अस्माकं श्रेयो मङ्गलं तनोतु विदधातु॥१४९॥

**म्भौ न्यौ यौ वेदयुगमुनिभिः स्यात्तदा चित्रलेखा॥१५०**

म्भौ न्याविति। यत्र यगण-भगण-नगण-यगण-त्रयश्च भवन्ति, चतुर्भिः सप्तभिः सप्तभिश्च यतिस्तच्चित्रलेखः छन्दः। छन्दो मञ्जर्यामत्र वैशिष्टम्—वर्णाश्वैर्मननततमकैः कीर्त्तिता चित्रलेखेयम्। वर्णाश्वैरिति। यस्याः प्रतिपादं मश्च नश्च नश्च तश्च तश्च मश्च मननततमकाः, स्वार्थेऽत्र क-प्रत्ययः। तैस्तथोक्तैर्गणैः, घटितं भवतीति शेषः। वर्णाश्च अश्वाश्च वर्णाश्वाः,

तैरेकादशभिः सप्तभिश्चाक्षरैरित्यर्थः। विच्छिन्नेति शेषः, इयं सा चित्रलेखा तन्नामकं वृत्तं कीर्त्तिता कथिता, सुधीभिरिति शेषः ॥१५०

**सौं जयौ भरसंयुतावृतुबाणाश्वैर्हरक्कन्तनम् ॥१५१**

सौंजेति। यत्र रगण-सगणौ जगण-यगणौ भगण-रगणौ च स्यातां, षड्भिः पञ्चभिः सप्तभिश्च यतिस्तद् हरक्कन्तनच्छन्दः ॥१५१

छन्दो मञ्जर्यामतिरिक्तानि छन्दांसि—

**मातसौ जौ भरसंयुतौ करिबाणश्वैर्हरिणप्लुता। (१)**

म स ज ज भ ज।

**पञ्चभकारयुताऽश्वगतिर्यदि चान्त्यसरचिता। (२)**

भ भ भ भ भ ग।

**'सुधा' तर्कैस्तर्कैर्भवति ऋतुभिर्यौ मो नसतसाः। (३)**

य म न स त स।

**वर्णाश्वैर्मननततमकैः कीर्त्तिता 'चित्रलेखे'यम्। (४)**

म न न त त म।

**भाद् रनना नसौ 'भ्रमरपदका'मिदमभिहितम्। (५)**

भ र न न न स।

**'शार्दूलं' वद मासषट्कयति मः सो जसौ रो मश्चेत्। (६)**

म स ज स र म।

**अर्थाश्वश्वै मभनयरयुगैर्वृतं मतं 'केसरम्'। (७)**

म भ न य र र।

म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः । (८)

म भ न ज भ र ।

सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता 'लालसा' । (९)

त न र र र र ।

भवति नयुगलं रभौ रसौ दशभिर्गजेन्द्रलता । (१०)

न न र भ र स ।

तद् भूतर्त्वश्वैर्म्मौ विरतिश्चेत् 'सिंहविस्फूर्जितं' यौ । (११)

म म भ भ य य ।

सौ जजौ भरसंयुतौ करिबाणखैः 'हरनर्त्तनम्' । (१२)

र स ज ज भ र ।

इह 'क्रीड़ाचक्रं' यमाख्यां समस्तैर्यकारैः समेतम् । (१३)

य म य य य य ।

वेदाङ्गान्तैर्मभनययुगैः स्यादियं 'चन्द्रलेखा' । (१४)

म भ न य य य ।

'होयक' मुदितं भसनजजनैरिह रगणोऽन्ततः । (१५)

भ स न ज न र ।

(१९)

ऊनविंशत्यक्षराऽतिधृति—र्यथा,

रसर्त्वश्वैर्यमौ म्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ॥१५२

ऊनविंशत्यक्षरेति—रसर्त्वेति । यगण-मगणौ नगण-सगणौ

रगणद्वयं गुरुश्चैते यत्र स्युः, षड्भिः षड्भिः सप्तभिश्च यतिः, तन् मेघविस्फूर्जिता छन्दः। अर्थात् यस्याः प्रतिपादं य् च मश्च यमौ यगण-मगणौ, तथा रश्च रश्च गुरुश्चेति ररगुरवः, तैः अन्तेऽवस्थितै रगण-गगणैरित्यर्थः। युतौ युक्तौ न् च सश्च नसौ नगण-सगणौ च स्यातामिति शेषः। रसर्त्वश्वैः षड्भिः सप्तभिश्चाक्षरैः विच्छिन्ने'ति शेषः, सा मेघविस्फूर्जिता तत् संज्ञकं वृत्तं स्यात्। पिङ्गलमतेऽस्या 'विस्मिते'ति नाम। उदाहरणम्—

कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेका

विनिद्राः कन्दल्यो दिशि दिशि मुदा दुर्दुरा दृप्तनादाः।

निशानृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चेत्।

प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात् किमन्यत्॥

कदम्बेत्यादि। विपिनपवनाः काननानिलाः कदम्बामोदाढ्याः कदम्बानां कदम्बपुष्पाणाम् आमोदेन सौरभेण आढ्या युक्ताः, तथा केकिनो मयूराः कान्तकेकाः कान्ताः श्रुतिमधुराः केकाः स्वजात्युचितध्वनयो येषां ते तथोक्ताः, तथा कदल्यः भूमिकदलीभेदाः विनिद्राः विगता निद्रा मुद्रणं यासां तादृशाः विकसिता इत्यर्थः। तथा दर्दुरा भेकाः मुदा हर्षेण दिशि प्रतिदिशं दृप्तनादाः दृप्तः उद्धतः नादः ध्वनिर्येषां तादृशाः। किञ्च, निशा रात्रिरपि नृत्यन्तीनां स्फुरन्तीनां विद्युतां तड़ितां यद् विलसितं विलासः, तेन लसन् उद्गच्छत् मेघविस्फूर्जितं मेघगर्जनं यस्यां तादृशी, प्रमोदा ध्यायकानि एतानि सर्वाण्येव वर्त्तन्त इति भावः। एतादृशे काले चेद् यदि प्रियः कान्तः असौ दनुजदलनः कृष्णः स्वाधीनः अस्माभिरायत्तः भवेदिति शेषः। तदा अस्मात् एतादृशात् कान्तसमागमात् अन्यत् अपरं राज्यं राजत्वादिकं किम्? न किमपीत्यर्थः॥१५२॥

**भवेत् सैवच्छाया तयुगगयुता स्याद् द्वादशान्ते यदा ॥१५३**

**य म न स त त ग ।**

भवेदिति। यत्र यगण-मगणौ नगण-सगणौ तगणद्वयं गुरुश्चेत् स्युः, तच्छाया छन्दः, इत्यर्थः। अर्थात् सा 'रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात्' इति प्रागुक्तलक्षणा मेघविस्फूर्जिता एव यदा यस्मिन् काले द्वादशान्ते द्वादशवर्णावसाने तयुगश्च गश्च तयुगगौ ताभ्यां द्वाभ्यां तगणाभ्याम् एकेन गगणेन च युता युक्ता स्यात्, तदा छाया तत् संज्ञकं नाम वृत्तं भवेत्। एवञ्च मेघविस्फूर्जितायां यथाक्रमं य-म-न-स-र-र-गा-गणा अस्यान्तु यमनसततगा इति फलितम्। उदाहरणम्—

अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः
स्फुरन्नानारत्नस्तवकिततनुश्चित्रांशुकालम्बितः।
न यस्याङ्घ्रेश्छायामुपगतवतां संसारतीव्रातप
स्तनोति प्रोत्तापं स जगदवतात् कंसारिकल्पद्रुमः॥

अभीष्टमिति। लसन्तो विराजमानाः दोषो बाहव एव चारुशाखा मनोहरविटपाः ताभिरुज्ज्वलो भास्वरः तथा स्फुरन्ति दीप्यमानानि नानारत्नान्येव स्तवकाः, ते सञ्जाता यस्यास्तथाभूता तनुः शरीरं यस्य तादृशः। किञ्च, चित्रांशुकेन बिचित्रकिरणजालेन च आलम्बितः आवृत यः जुष्टः पूजितः सन् अभीष्टम् अभिलषितं वस्त्विति शेषः। वितरति ददाति, तथा यस्य अङ्घ्रेश्चरणस्यैवाङ्घ्रेर्मूलस्य छायाम् उपगतवताम् आश्रयरूपेण प्राप्तवतां संसारतीव्रातपः संसार एव तीव्रः उत्कट आतपः रौद्रम् अतिदुःसहसंसाररूपातपः इत्यर्थः, प्रोत्तापम् अत्यन्तसन्तापं न तनोति न विस्तारयति, स कंसारिकल्पद्रुमः कंसारिः कृष्णः स एव कल्पवृक्षः जगद् विश्वम् अवताद् रक्षतु॥१५३॥

**सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितम् ॥१५४**

यत्र मगण-सगणौ जगण-सगणो तगणाद्वयं गुरुश्चैते स्युः, द्वादशभिः सप्तभिश्च यतिः, तच्छार्दूलविक्रीड़ितच्छन्दः। अर्थात् सूर्य्याश्वैर्मसजसतताः सगुरवः 'शार्दूलविक्रीड़ितम्' इति तु पाठः। यस्य प्रतिचरणं सगुरवः अन्तिमेनैकेन गुर्वक्षरेण युक्ता इत्यर्थः, मश्च सश्च जश्च स् च तश्च तश्च मसजस्तताः, यथाक्रमं मगण-सगण-जगण-तगण-तगणाः स्युरिति शेषः। तत् सूर्य्याश्च अश्वाश्च सूर्य्याश्वाः, तैर्द्वादशभिः सप्तभिश्चाक्षरैरित्यर्थः। विच्छिन्नमिति शेषः, शार्दूलविक्रीड़ितं तदाख्यकं वृत्तं भवति। उदाहरणम्—

गोविन्दं प्रणमोत्तमाङ्ग रसने त्वं घोषयाहर्निशं
पाणी पूजय तं मनः सारपदे तस्याऽऽलयं गच्छतम्।
एवञ्चेत् कुरुथाखिलं मम हितं शीर्षादयस्तद्ध्रुवं
न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीड़ितम् ॥

गोविन्दमिति। उत्तमाङ्ग हे शिरः, 'उत्तमाङ्गं शिरः शीर्ष'मित्यमरः, गोविन्दं कृष्णं प्रणम, प्रकर्षेण नमस्कुरु, त्वमिति शेषः। एवं परत्रापि। रसेन हे जिह्वे, तं गोविन्दम् अहर्निशं निरन्तरं घोषय गोविन्द इति नामोच्चारयेत्यर्थः। पाणो हे भुजौ, तं पूजयतं पाद्यार्घ्यादिदानेनार्चयतम्, युवामिति शेषः। मनः हे मानस, तं स्मर चिन्तय। पदे हे चरणौ, तस्य गोविन्दस्य आलयं गृहं मन्दिरमिति यावत्, गच्छतम् व्रजतम्। शीर्षादयः हे उत्तमाङ्गादयः, चेद् यदि एवम् उक्तप्रकाशेण मम अखिलं सर्वं हितं मङ्गलं कुरुथ, यूयमिति शेषः। तत् तदा भवतां कृते युष्माकं कृपयेत्यर्थः। भवः संसार एव महाशार्दूलः महान् व्याघ्रः तस्य विक्रीड़ितम् आक्रमणचेष्टाम्, रोगशोकादिकमित्यर्थः, ध्रुवं निश्चितं न प्रेक्षे न द्रक्ष्यामि ॥१५४॥

**म्रौ भ्नौ यो नो गुरुश्चेत् स्वरमुनि-करणैराह सुरसाम् ॥१५५**

यत्र मगण-रगणौ भगण-नगणौ यगण-नगण-गुरवश्चैते भवन्ति, सप्तभिः सप्तभिः पञ्चभिश्च यतिः, तत् सुरसा छन्दः। अर्थात् यस्याः प्रतिपादे यथाक्रमं म्च रश्च म्रौ मगण-रगणौ, भ्च नश्च भ्नौ भगण-नगणौ, यः एको यगणः, नः एको नगणः, गुरुरेको गगणश्च स्यात्, सा चेद् यदि स्वराश्च मुनयश्च करणानि च तैः सप्तभिः सप्तभिः पञ्चभिश्चाक्षरैरित्यर्थः। विच्छिन्ना भवतीति शेषः, तदा तां सुरसां तन्नामकं वृत्तम् आह, कथयति सुधीजन इति शेषः। उदाहरणम्—

कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात्
　　कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः।
गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां
　　शङ्के पीयूषपानैः प्रचुरकृतसुखं व्यस्मरदसौ॥

कामेति। मधुसमयस्य वसन्तकालस्य समारम्भेन आगमनेन यः रभसः हर्षः, 'रभसो हर्षवेगयो'रिति कोषः, तस्मात् वसन्त-समागमजनित-हर्षादित्यर्थः, कामक्रीड़ायां सुरतक्रीड़ायां सतृष्णः साभिलाषः, अतएव कालिन्दीकूलकुञ्ज यमुनातटस्थितलतागृहे यद् विहरणकुतुकं विहारकौतुहलं तेन आकृष्टं हृद्यं मानसं यस्य स तादृशः सन् असौ गोविन्दः कृष्णः वल्लवीनां गोपबधूनां सरसां रसयुक्ताम् अधरसुधां प्राप्य, पीयूषपानैः प्रचुरकृतसुखं प्रचुरं यथा स्यात्तथा कृतं जनितं सुखम् आनन्दं व्यस्मरद् विस्मृतवान् इति शङ्के सम्भावयामि अहमिति शेषः। कथमन्यथा तत्रैवानु-रागाधिक्यमिति भावः॥१५५॥

**मो गौ नौ नौ गौ शरवयतुरगैः फुल्लदाम-प्रसिद्धम् ॥१५६**

मो गाविति। मगणो गुरुद्वयं नगणद्वयं तगणद्वयं पुनर्गुरुद्वयं

च यत्र स्यात्, पञ्चभिः सप्तभिः सप्तभिश्च यतिः, तत् फुल्लदाम च्छन्दः। अर्थात् यस्य प्रतिपादे क्रमशः म एको मगणः गौ द्वौ गगणौ, नौ द्वौ नगणौ, तौ द्वौ तगणौ, गौ द्वौ गगणौ च स्याताम्, शराश्च हयाश्च तुरगाश्च तैः, पञ्चभिः सप्तभिः सप्तभिश्चाक्षरैरित्यर्थः। विच्छिन्नमिति शेषः, तत् फुल्लदाम तन्नामा प्रसिद्धं वृत्तं भवति। उदाहरणम्—

शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं
　　　　हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम्।
मुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं
　　　　मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम॥

शश्वदिति। शश्वत् निरन्तरं लोकानां त्रिभुवनस्य सम्बन्धे प्रकटितम् अनुष्ठितं कदनं पीडनं येन तादृशं कंसं कंसासुरं ध्वस्तम् अर्थात् कृष्णेन हतम्, आलोक्य दृष्ट्वा, हृष्यच्चेतोभिः हृष्यत् सन्तुष्यत् चेतो मानसं येषां तैः, आनन्दितहृदयैरित्यर्थः। त्रिदिववसतिभिः त्रिदशालयैः देवैरित्याशयः, व्योमसंस्थः आकाशस्थितः सद्भिः विमुक्तं विसृष्टम्, मुग्धामोदेन मनोहरसौरभेण स्थगित आच्छादितः पूरित इत्यर्थः। दशदिशाम् आभोगो विस्तारो येन तादृशम्, अतएव आहूता आकारिताः आकृष्टय आनीता इत्यर्थः। भृङ्गा भ्रमरा येन तादृशम्, अनुपमम् अतुलं स्वस्तरोः पारिजातवृक्षस्य फुल्लदाम विकसितपुष्पमाल्यं दैत्यारेः कृष्णस्य मौलौ शिरसि न्यपतत् पतितमभूत्॥१५६॥

**र्भौ जतौ तस्त-गुरुकौ यदा दिग्ग्रहच्छेदभाग् वल्लकी ॥१४७**

रगण-भगण-जगणा स्तगणत्रयं गुरुश्च यत्र भवन्ति, दशभिर्नवभिश्च यतिः तद्वल्लकी छन्दः॥१५७॥

इतः परं छन्दो मञ्जर्यामस्ति वैशिष्टम्—

**न-युगल-गलघू निरन्तरौ यदा स 'पञ्चचामरः' (१)**
**न न गल गल गल गल गल गल ग**

नयुगलेति। यदा यदि छन्दसः प्रतिपादे गश्च लघुश्च गलघू, नयुगलात् गलघू नयुगलगलघू, द्वाभ्यां नगणाभ्यां परम् एको गगण एको लगणश्चेत्यर्थः, निरन्तरौ निर्न विद्यते अन्तरमवकाशो ययोस्तौ तादृशौ, गुरुर्लघुर्गुरुर्लघुरित्येव क्रमेण वर्त्तमानावित्यर्थः, भवत इति शेषः। नैरन्तर्य्यञ्च प्रस्तावितोनविंशत्यक्षरपूर्त्त्यवसानम्, एवञ्च 'गलघू' इति स्थितेऽपि ऊनविंशत्यक्षरसमाप्त्या लघुमनपेक्ष्य 'ग'कारेणैव पादसमाप्तिः कृता, इति ज्ञेयम्। सप्तम-नवमैकादश-त्रयोदश-पञ्चदश-सप्तदशोनविंशाक्षराणि दीर्घाणि शिष्टानि च लघूनि भवेयुरित्याशयः। तदा स पञ्चचामरस्तदाख्यकं वृत्तं भवति। अत्र निरन्तरपदार्थस्य 'ग लघू' इत्येकदेशेनान्वयो बोध्यः। (१)

**वृत्तं 'बिम्बाख्यं' शरमुनितुरगैर्म्तौ न्सौ ततौ चेद् गुरुः। (२)**
**म त न स त त ग।**

वृत्तमिति। यस्य प्रतिपादे क्रमेण म् च तश्च मगण-तगणौ, न् च सश्च न्सौ नगण-सगणौ, तश्च तश्च ततौ, तथा गुरुरेको गगणश्च स्यादित्यर्थः। तत् चेद् यदि शराश्च मुनयश्च तुरगाश्च शरमुनितुरगाः, तैः पञ्चभिः सप्तभिः सप्तभिश्चाक्षरैरित्यर्थः। विच्छिन्नं स्यादिति शेषः, तदा विम्बनामकं वृत्तं भवति। (२)

**रसैः षड्भिर्लोकैर्यमनजजा गुरु'र्मकरन्दिका'। (३)**

रसैरिति। यस्याः प्रतिपादं क्रमशः यश्च मश्च नश्च सश्च जश्च जश्च ते तथोक्ता गणाः, गुरुरेको गगणश्च स्यादित्यर्थः। सा रसैः षड्भिः षड्भिः लोकैः सप्तभिश्चाक्षरैरित्यर्थः, विच्छिन्नेति

शेषः। मकरन्दिका तदाख्यकं वृत्तं भवेत्। (३)

**इनाश्वैः स्याद् यभनयजजगाः कीर्त्तिता 'मणिमञ्जरी' (४)**

**य भ न य ज ज ग।**

इनाश्वैरिति। यस्याः प्रतिपादे क्रमेण यश्च भश्च नश्च यश्च जश्च गश्च गश्च ते यभनयजयगास्तथोक्ता गणाः, स्युरिति शेषः, सा इनाश्च अश्वाश्च इनाश्वाः, तैः द्वादशभिः सप्तभिश्चाक्षरैरित्यर्थः, विच्छिन्नेति शेषः, 'मणिमञ्जरी' तन्नामकं वृत्तं कीर्त्तिता स्यात् कविभिः कथिता भवेत्। (४)

**गजाब्धितुरगैर्जसौ जसतभा गश्चेत् 'समुद्रतला' (५)**

**ज स ज स त भ ग।**

गजेति। यस्याः प्रतिपादं यथाक्रमं जश्च सश्च जसौ जगण-सगणौ, जश्च सश्च तश्च भश्च जसतभाः जगण-सगण-तगण-भगणाः, ग एको गगणाश्च स्यात्, सा चेद् यदि गजाश्च अब्धयश्च तुरगाश्च तैः, अष्टाभिश्चतुर्भिः, सप्तभिश्चाक्षरैरित्यर्थः, विच्छिन्ना भवेदिति शेषः, तदा समुद्रतला तत् संज्ञकं वृत्तं स्यात्। (५)

(२०)

**विंशत्यक्षरा कृति—यथा,**

**ज्ञेया सप्ताश्व-षड्भिर्मरभनयभला गश्चेत् सुवदना ॥१५८**

विंशत्यक्षरेति—ज्ञेयेति। यत्र मगण-रगण-भगणा नगण-यगण-भगणा लघुगुरु च भवन्ति, तत् सुवदना छन्दः, सप्तभिः सप्तभि. षड्भिश्च तत्र यतिरित्यर्थः। अर्थात् या प्रतिपादं प्रथमतः मश्च रश्च भश्च नश्च यश्च मरभनयाः, तैर्युता युक्ता

स्यात्, यस्याश्चान्ते भ् च लश्च भ्लौ भगण-लगणौ, ग एको गगणश्च भवेत्, सा सप्त च अश्वाश्च षट् च सप्ताश्वषट्, तैः सप्तभिः सप्तभिः षड्भिश्चाक्षरैरित्यर्थः। यतिमतीति शेषः, सुवदना तन्नामकं वृत्तं ज्ञेया अवगन्तव्या विद्वद्भिरिति शेषः। उदाहरणम्—

प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्थपुलका।
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्त्ति त्यक्तुकामा ननु नरकरिपो राधा मम सखी॥

प्रत्याहृत्येति। नन्विति सम्बोधनसूचकमव्ययम्। हे नरकरिपो कृष्ण, योगैकरसिका योगश्चित्तवृत्तिनिरोधः त्वत्संसर्गो वा, तस्मिन् एकरसिका एकान्ततो बद्धचित्ता मम सखी सहचरी सुवदना सुमुखी राधा राधिका कामार्त्तिम् अनङ्गवेदनां त्यक्तुकामा विहातुमभिलषन्ती, नासाग्रे नासाग्र नासिकाग्रभागे नयने लोचने यस्याः सा तादृशी सती, त्वदितरविषयात् त्वद् व्यतिरिक्तपदार्थ-समूहात् इन्द्रियाणि मनः प्रभृतोन्येकादशजरणानि प्रत्याहृत्य प्रत्यावर्त्त, संरुध्येत्यर्थः। परतरपुरुषं परमपुरुषं त्वां ध्यायन्ती मनसा चिन्तयन्ती, अतएव हर्षोत्थपुलकाहर्षेण भाविप्रियसमागम-जनितेनाऽऽनन्दविशेषेण उत्थः उद्भूत पुलको रोमाञ्च यस्याः सा तथाभूता। किञ्च, आनन्दाश्रुभिर्हर्षोत्पन्ननयनाम्बुधिः प्लुते परिव्याप्ते अक्षिणी लोचने यस्यास्तादृशी च सती निकुञ्जे केञ्जगृहे वसति तिष्ठति॥१५८॥

**सजजा भरौ सलगा यदा गदिता तदा किल गीतिका॥१५९**

सजजा इति। सगणो जगणद्वयं भगण-रगणौ सगण-लघु-गुरवश्चैते यत्र भवन्ति, तद् गीतिका छन्दः। अर्थात् यदा यदि

छन्दसः प्रतिचरणं सश्च जश्च जश्च सजसाः सगण-जगण-जगणाः, भश्च रश्च भरौ भगण-रगणौ, सश्च लश्च गश्च सलगाः सगण-लगण-गगणाश्च स्युरिति शेषः, तदा गीतिका तदाख्यकं वृत्तं कथिता गदिता सुधीभिरिति शेषः। खलु इति वाक्यालङ्कारे।

उदाहरणम्—

करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा
रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा।
बहुलानुरागनिवासरासससमुद्भवा भवरागिणं
विदधौ हरिं खलु वल्लवीजनचारुचामरगीतिका॥

करेति। करतालैः हस्ताभ्यां तालप्रदानैः चञ्चलानाम् इतस्ततः सञ्चलतां कङ्कणानां करभूषणानां यः स्वनः ध्वनिः, तस्य मिश्रणेन सम्पर्केण मनोरमा हृदयहारिणी, तथा रमणीयो मनोज्ञः मधुर इति यावत्, यो वेणुनिनादः वंशीध्वनिः, तस्य रङ्गिम्णो लालित्यस्य सङ्गेन सम्पर्केण सुखावहा श्रवणसुखदायिनी, किञ्च, बहुलानुरागस्य समधिकप्रेम्णः निवासः आश्रयरूपः यो रासः क्रीड़ाविशेषः, तत्र समुद्भवा उत्पन्ना, वल्लवजनानां गोपबधूनां चारुचामरगीतिका मनोहरप्रकीर्णकगीतिः हरिं कृष्णं भवः संसारः, तत्र रागिणम् अनुरागवन्तं विदधौ खलु चकारैवेत्यर्थः॥१५९॥

**त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तं नाम ॥१६०**

त्री रजाविति। यत्र रगण-जगणौ त्रिरुक्तौ गुरुलघू च स्यातां तद् वृत्तं छन्दः। अर्थात् वृत्तमीदृशन्तु नामतो रजौ रजौ गुरुर्लघुश्च। यस्य प्रतिपादं क्रमशः रजौ रजौ रजौ रगण-जगण-रगण-जगण-रगण-जगणाः, गुरुरेको गगणाः, लघुरेको लगणश्च स्यादित्यर्थः, ईदृशम् उक्तप्रकारं तत् नामतो नाम्ना वृत्तं वृत्तसंज्ञकं छन्दः स्यात्। उदाहरणम्—

चित्रवृत्तलीलया निसर्गरम्यदेहरूपविभ्रमेण
राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन ।
यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य
विष्णुरुल्ललासचित्तपद्मकोषषट्पदः स मे सदाऽस्तु ॥

चित्रेति । यः विष्णुर्हरिः चित्रं मनोहरं यद् वृत्तं चरित्रं तस्य या लीला विलासः, तया, तथा राजमानं यद् सद्वयः यौवनम्, तस्य विलास एव सम्पद् तया, तथा निसर्गरम्यः स्वभावसुन्दरः यो देहः, तस्य रूपविभ्रमेण सौन्दर्य्यविलासेन, किञ्च, कलासु नृत्यादिचतुःषष्टिविद्यासु यत् कुतूहलम् औत्सुक्यं तेन च । सर्वत्र रेतौ तृतीया । सुराङ्गनानिभैः देवाङ्गनासदृशैः व्रजाङ्गनाजनैः व्रजरमणीभिः समं सह समेत्य मिलित्वा सुखं यथा स्यात्तथा उल्लास खेलितवान्, स हरिः सदा निरन्तरं मे मम चित्तमेव पद्मं कमलं तस्य कोषे अभ्यन्तरे षट्पदः भ्रमरस्तत्स्वरूप इत्यर्थः । अस्तु भवतु । हरिर्निरन्तरं मम मानसे निवसतु इति भावः ॥१६०॥

**रसाश्वाश्वैः शोभा यमननन ततगा गश्च विच्छिन्निरुक्ता ॥१६१**

रसाश्वेति । यत्र यगण-मगणौ भगणद्वयं तगणद्वयं गुरुद्वयञ्चैते भवन्ति, षड्भिः सप्तभिश्च यतिः स्यात्तत् शोभा छन्दः । अर्थात् रसाश्वाश्वैः शोभा नयुगगजठरा मेघविस्फूर्जिता चेत् । चेत् यदि मेघविस्फूर्जिता 'रसर्त्वंश्वः य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात्' इत्युक्तलक्षणं मेघविस्फूर्जिता वृत्तमित्यर्थः । नयुगश्च गश्च नयुगगौ, तौ जठरे मध्ये अर्थात् नकार-सकारयोः स्थाने यस्यास्तादृशी सती, रसाश्च अश्वाश्च अश्वाश्च अश्वाश्च रथाश्वाश्वाः, तैः षड्भिः षड्भिः सप्तभिश्चाक्षरैरित्यर्थः । विच्छिन्ना भवतीति शेषः, तदा शोभा तदाख्यकं छन्दः स्यात् । मेघ-

विस्फूर्जितायां यथाक्रमं य-म-नस-र-र-गा गणाः षड्भिः षड्भिः सप्तभिश्चक्षरैश्च यतिः, इह तु य म न न ग र र गा गणाः षड्भिः सप्तभिः सप्तभिश्च यतिरित्यनयोर्भेदः। ग्रन्थान्तरेऽस्याः 'रसैरश्वै-रश्वैर्यमननततगैर्गेन शोभैयमुक्ता' इत्येवं लक्षणमुक्तम्। एतद् ग्रन्थोक्तलक्षणेन न कश्चिद्विरोधः शङ्कनीयः, फले द्वयोरेव तु लयत्वात्। उदाहरणम्—

सदा मूलान्मीलत् सरसिजयुगला मध्यनम्रा फलाभ्यां
तरोरूर्ध्वं राजन्किसलयाश्लिष्टसुस्निग्धशाखा।
लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चितात्मा
महाशोभा मौलौ मिलदलिपटलैः कृष्ण सा काऽपि वल्ली॥

हे कृष्ण! सदा निरन्तरं मूले उन्मीलत् विकसत् सरसिज युगलं कमलयुगलम् अर्थात् चरणद्वयं यस्याः सा, तथा फलाभ्यां अर्थात् स्तनाभ्यां मध्यनम्रा मध्ये मध्यावयवे अर्थात् कटिदेशे नम्रा अवनता, तथा तयोरूर्ध्वं फलयोरूर्ध्वभागे राजन्ती लसन्ती ये तरलकिसलये चञ्चलपल्लवौ अर्थात् हस्तौ, ताभ्याम् आश्लिष्टे संयुक्ते सुस्निग्धे सुकोमले शाखे अर्थात् बाहू यस्याः सा, तथा, मुक्ता रक्तोत्पलकुवलयानि अर्थात् दन्तौष्ठनेत्रं विद्यन्ते यत्र तच्च तच्चन्द्रबिम्बञ्चेति, लसन्मुक्तारक्तोत्पलकुवलयचन्द्रबिम्बम् लसता शोभमानेन मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बेन अर्थात् दशनौष्ठ-लोचनया वदनमण्डलेन अञ्चितं विराजितम् अयम् ऊर्ध्वभागो यस्याः सा, लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चिताग्रा तादृशी, किञ्च, मौलौ शिरसि मिलत् सङ्गतं यद् अलिपटलं भ्रमरकुलम् अर्थात् केशाः, तैः महती शोभा यस्यास्तथाभूता, सा राधा काऽपि अनिर्वचनीया प्राकृतवल्लीविलक्षणा वा वल्लीलतारूपा, राजत इति शेषः। वल्लीह मृणालिका, प्रसिद्धमृणालिकात्वेतद्विलक्षणेति द्रष्टव्यम्॥१६१॥

**छन्दो मञ्जर्यामत्र विशेषोऽस्ति**

**ख्याता पूर्वैः 'सुवंशा' यदि मरभनाः सद्वयं गोगुरुश्च । (१)**

**भ र भ न स स ग ग ।**

यदि चेत् छन्दसः प्रतिपादे यथाक्रमं मश्च रश्च भश्च नश्च मरभनाः मगण-रगण-भगण-नगणाः, सद्वयं द्वौ सगणौ, एः एको गगणः, गुरुश्च ततोऽप्येको गगणश्च स्यादित्यर्थः, तदा पूर्वैः पूर्वाचार्यैः पिङ्गलप्रभृतिभिरित्यर्थः। सुवंशा तन्नामकं वृत्तं ख्याता कथिता। (१)

**सभरा न्मौ यलगास्त्रयोदशयति'र्मत्तेभविक्रीड़ितम्' । (२)**

**भ भ र न म य ल ग ।**

यस्य प्रतिचरणं क्रमशः सश्च भश्च रश्च सभराः सगण-भगण-रगणाः, न्च मश्च न्मौ नगण-मगणौ, यश्च लश्च गश्च यगण-लगण-गगणाश्च स्युः, किञ्च, त्रयोदशयतिः, त्रयोदशभिरक्षरैर्यतिश्च भवेत्, तत् मत्तेभ विक्रीड़ितं नाम वृत्तं भवति। (२)

## (२१)

**एकविंशत्यक्षरा प्रकृति—यथा,**

**म्रभ्नैर्यानां त्रयेन त्रिमुनियतियुता कीर्त्तिता स्रग्धरेयम् ।।१६२**

एकविंशत्यक्षरेति—म्रभ्नैरिति । मगण-रगण-भगण-नगणै स्त्रिभिर्यगणैश्च स्रग्धरा छन्दः। तत्र सप्तक-त्रयेन यतिः स्यात्। अर्थात् यस्याः प्रतिपादं म्च रश्च भ्च नश्च म्रभ्नाः मगण-रगण-भगण-नगणाः, तै तथा यानां यगणानां त्रयेन च घटितं भवतीति शेषः, इयं सा त्रिमुनियतियुता त्रिवारं मुनिषु यतियुता सप्तसु सप्तसु सप्तसु चाक्षरेषु यतिमतीत्यर्थः। स्रग्धरा तदाख्यकं वृत्तं

कीर्त्तिता कथिता सुधीभिरिति शेषः। उदाहरणम्—

व्याकोषेन्दीवराभा कनकरसलसत्पीतवासाः सुहासा
वर्हैरुच्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतंसा।
अंशव्यासक्तवंशीध्वनिसुखितजगद्वल्लवीभिर्लसन्ती
मूर्त्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धरा हारिहारा॥

व्याकोषेति। व्याकोषं विकसितं यद् इन्दीवरं नीलकमलं तस्य आभा इव आभा यस्यां तादृशी, तथा कनकरसवत् सुवर्ण-द्रववत् लसत् दीप्यमानं पीतं पीतवर्णं वासः वसनं यस्यां सा, तथा उद्गताः सञ्जाताः ये चन्द्रकाः पिच्छस्थचिह्नविशेषाः, तैः अन्तैः मनोज्ञैः, वर्हैः मयूरपिच्छैः, वलयिता वलयाकारेण वेष्टिताः चिकुराः केशा यस्यां तादृशी, किञ्च, चारुर्मनोहरः कर्णावतंसः कर्णभूषणं यस्यां सा, तथा अंसे स्कन्धदेशे व्यासक्ता संसक्ता या वंशी वेणुः, तस्या ध्वनिना रवेण सुस्थितम् आनन्दितं जगद् विश्वं यया तथाभूता, बल्लवीभिः गोपबधूभिः सहेति शेषः, लसन्ती विहरन्ती, स्रग्धरा गृहीतमालिका, हारी मनोज्ञः हारः कण्ठभूषणं यस्यां सा गोपस्य गोपवेषधारिणी विष्णोः कृष्णस्य मूर्त्तिः आकृतिः जगति पृथिव्यां वो युष्मान् अवतु पातु॥१६२॥

**नजभजजा जरौ यदि तदा गदिता सरसी कवीश्वरैः ॥१६३**
**(सिद्धिरिति सिन्धुकमिति च क्वचित)**

नजभेति। नगण-जगण-भगणा रगणश्च यत्र स्युः, तत् सरसी छन्दः। अर्थात् चेत् छन्दसः प्रतिचरणं क्रमशः नजभजजा नगण-जगण-भगण-जगण-जगणाः जरौ जगण-रगणौ च स्याताम्, तदा कविश्वरैः सरसी तत् संज्ञकं वृत्तं गदिता कथिता। अस्याः राज्ञि वदनेति नामधेयमेकादशभिर्दशभिश्च यतिरिति पिङ्गलाचार्य मतम्। यत्तु मल्लिनाथेन रघुवंशे 'तुरगशताकुलस्येति' श्लोक-

व्याख्यानावसरे 'नजभजजा जरौ नरपते कथिता भुवि पञ्चकावली' इति संज्ञान्तरमस्याः समाकलितम्, तद् वृत्तिकारस्यापि सम्मतमेवेत्यवगच्छामः। वृत्तिकारेण—'शशिवदना न्जौ भ्जौ ज्ज्रौ रुद्रदिशः' इति पिङ्गलसूत्रवृत्तौ पञ्चकावलीति केचित् इत्यभिधाय 'तुरगशताकुलस्येति' श्लोकस्यैवोदाहरणत्वेन गृहीतत्वात्। उदाहरणम्—

चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्मिषु
स्फुटवदनाम्बुजासु विलसद्भुजबालमृणालवल्लिषु।
कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली
व्यरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम्॥

चिकुरेति। चिकुरकलापाः केशपासा एव शैवलानि, तैः कृतो विदितः प्रमद आनन्दातिशयः अर्थादच्युतस्येति भावः, याभिः तासु, तथा लसन्तो व्यक्तीभवन्तः ये रसा अर्थादच्युतं प्रत्यनुरागविशेषाः, त एव रसोर्म्मयः जलतरङ्गा यासां तासु, तथा स्फुटानि विकसितानि अर्थादच्युतालोकनेन उत्फुल्लानि यानि वदनानि मुखानि तान्येव अम्बुजानि कमलानि यासु तासु, तथा विलसन्तः स्फुरन्तः ये भुजाः बाहवः, त एव बालमृणालवल्लयः नवीनमृणाललता यासु तथाभूतासु, किञ्च, कुचयुगानि स्तनयुगलानि एव चक्रवाकमिथुनानि चक्रवाकद्वन्दानि, तैः अनुभवासु अन्वितासु तद्वतीषु इत्यर्थः। व्रजमृगीतयना व्रजकामिन्यः, ता एव सरस्यः सरांसि तासु, कलाकुतूहली कलाः नृत्यादिचतुःषष्टिविद्या, तत्र कुतूहली कौतुकवान् अच्युतः कृष्णः विभ्रमं विहारं व्यचरयत् कृतवान्॥१६३॥

## (२२)

**आकृतिः। द्वाविंशत्यक्षराऽऽकृति—यथा,**

**मौ गौ नाश्चत्वारो गो गो वसुभुवनयतिरिह भवति हंसी ॥१६४**

द्वाविंशत्यक्षरेति—मौ गाविति। यत्र मगणद्वयं गुरुद्वयं पुनर्गुरुद्वयं च स्यादष्टभिश्चतुर्दशभिश्च यतिस्तत् हंसी छन्दः। अर्थात् यस्याः प्रतिचरणं क्रमशः मो द्वौ मगणौ, गौ द्वौ गगणौ, चत्वारो नाः नगणाः, गो गो द्वौ गगणौ च स्याताम्, सा वसुभिरष्टाभिः भुवनैश्चतुर्दशभिश्चाक्षरैर्विहिता यतिर्यस्यां सा वसुभुवनयतिः, अष्टाभिश्चतुर्दशभिश्चाक्षरैर्विहितयतिकेत्यर्थः, हंसीति वृत्तं भवति। उदाहरणम्—

सार्धं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि पिबन्ती
　　कामक्रीड़ाकूतस्फीतप्रमदरसरभसमलघु रसन्ती।
कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे
　　कंसाराते पश्य स्वेच्छं सरभसगतिरिह विलसति हंसी ॥

हे कंसराते कृष्ण ! पश्य अवलोकय, द्रष्टव्यमेव विवृणोति। कामक्रीड़ायाः सुरतविलासस्य यद् आकूतम् अभिलाषः, तेन स्फीतः वर्धितः प्रमदरसयोर्हर्षानुरागयोः रभसो वेगो यत्र तद् यथा स्यात्तथा, किञ्च, अलघु मन्दं मन्दं रसन्ती कूजन्ती सरभसा सवेगा गतिर्गमनं यस्याः सा सरभसगतिः, शीघ्रगमनेत्यर्थः। असौ परिदृश्यमाना हंसी काचन हंसपत्नी, पवनस्य वायोः पतनेन सञ्चारेण परितरलाः चञ्चलाः इतस्ततो विक्षित इति यावत्, परागाः कुसुमरजांसि यस्मिन् तथाभूते अस्मिन् कालिन्दीये यमुनातटसम्बन्धिनि पद्मारण्ये कमलकानने, एकान्ते रहसि कान्तेन प्रियेण हंसेनेत्यर्थः, सार्धं सह सुरभि सुगन्धि विकच कमलमधु विकसितसरोजमकरन्दं पिबन्ती सती स्वच्छं स्वच्छन्दं यथा स्यात्तथा विलसति क्रीड़ति। स्वच्छमिति स्व स्वीया इच्छा यत्रेति बहुव्रीहिणा, स्वेच्छा अस्त्यस्मिन्नित्यत् प्रत्ययेन

वा निष्पन्नं क्रियाविशेषणम् ॥१४६॥

**भ्रौ नरनारनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम् ॥१६५**

भ्रौ नेति। यत्र भगणस्ततो रगण-नगणश्चैतौ त्रिः पठितौ गुरुश्चैकस्तद् भद्रकच्छन्दः। दशभिर्द्वादशभिश्च तत्र यतिरित्यर्थः। अर्थात् यस्य प्रतिपादं आदौ भ् च रश्च भ्रौ भगण-रगणौ, नश्च रश्च नश्च नरनाः नगण-रगण-नगणाः, रश्च नश्च रनौ रगण-नगणौ, अथ तदनन्तरं गुरुरेको गगणश्च स्यात्, दिशश्च अर्काश्च दिगर्काः तैर्दशभिर्द्वादशभिश्चाक्षरैरित्यर्थः। विरमो यतिर्यत्र तादृशम्, इदं तत् भद्रकं तन्नामकं वृत्तं भवति। हीत्यवधारणम्। अस्योदाहरणम्—

भद्रकगीतिभिः सकृदपि स्तुवन्ति भव ये भवन्तमभवं
भक्तभरावनम्रशिरसः प्रणम्य तव पादयोः सुकृतिनः।
ते परमेश्वरस्य पदवीमवास्य सुखमाप्नुवन्ति विपुलं
मर्त्यभुवं स्पृशन्ति न पुनर्मनोहरसुराङ्गनापरिवृताः॥
(पिङ्ग० ३।२६) ॥१६५॥

**सप्त-भकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा ॥१६६**

सप्तेति। सप्तभिर्भगणैर्गुरुणा च मदिरा छन्दः। अर्थात् या सप्त-भ-कारयुता आदौ सप्तभिर्भगणैरन्विता, तथा एकः गुरुर्यस्यां सा एकगुरुः, अन्ते गुरुवर्णेनैकेन चान्वितेत्यर्थः, इयं सा उदारतरा अतिमहती अन्वर्थनामेत्यर्थः, मदिरा तदाख्यकं वृत्तं गदिता कथिता सुधीभिरिति शेषः। उदाहरणम्—

माधवमासि विकस्वरकेशरपुष्पलसन्मदिरामुदितै-
र्भृङ्गकुलैरुपगीतवने वनमालिनमालि कलानिलयम्।
कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं
तं भज माधविकामृदुनर्त्तक-यामुनवातकृतोपगमम्॥

माधवेति। हे आलि सखि ! 'आलिः सखी वयस्ये'त्यमरः। माधवमासि वैशाखमासे, वसन्तसमय इत्याशयः, विकस्वराणि विकसनशीलानि यानि केशरपुष्पाणि पुन्नागकुसुमानि तेषां लसन्त्यः शोभमाना या मदिराः मकरन्दाः ताभिः मुदितैः हृष्टैः भृङ्गकुलैः भ्रमरसमूहैः उपगीतवने गुञ्जितोद्याने तं वनमालिनं कृष्णं भज सेवस्व। कीदृशम् ? कलानिलयं कलानां नृत्यादि-चतुःषष्टिविद्यानां निलयम् आश्रयम्, तथा कुञ्जगृहोदरे लतादि-निर्मितगृहाभ्यन्तरे पल्लवैः नवीनपत्रैः कल्पितं रचितं तल्पं शय्या येन तम्, किञ्च, अनल्पो बहुः मनोज्ञरसः कामानुरागो यस्य तम्। तं कीदृशी ? माधविकानां वासन्तीलतानां मृदुमन्दं यथा स्यात्तथा नर्त्तकीयो यामुनवातः यमुनासम्बन्धीसमीरणः, तेन कृतो जनितः उपगमः आसक्तिर्यस्या सा ॥१६६॥

**सजताः नसौ ररौ गः फणितुरङ्गहयैः स्यान्महास्रग्धराख्या ॥१६७**

सजता इति। सगण-जगण-तगणैः सगणद्वयेन गुरुणा च महास्रग्धरा छन्दः। अष्टभिः सप्तभिश्च तत्र यतिरित्यर्थः। अर्थात् सजता नसौ ररौ गः फणितुरगहयैः स्यान् 'महास्रग्धराख्या। स ज त न स र र ग। यस्याः प्रतिपादं सश्च जश्च तश्च सजताः सगण-जगण-तगणाः, नश्च सश्च नसौ नगण-सगणौ, रश्च रश्च ररौ द्वौ रगणौ, गः एको गगणश्च स्यात्, सा फणिनश्च तुरगाश्च हयाश्च, तैः अष्टाभिः सप्तभिः सप्तभिश्चक्षरैरित्यर्थः, विच्छिन्नेति शेषः। महास्रग्धराख्या महास्रग्धरानामकं वृत्तं भवति ॥१६७॥

**लालित्य भुजगेन्द्रेण भाषितमेतच्चेन्मसरस्तजनगुभिः ॥१६८**

लालित्यमिति। मगण-सगण-रगण-सगणास्तगण-जगण-नगण-गुरवश्च यदि भवन्ति तर्हि लालित्य छन्दः। **म स र स त ज**

न ग। अर्थात् चेद् यदि छन्दसः प्रतिचरणं मश्च सश्च रश्च स्च तश्च जश्च नश्च तैः यथाक्रममवस्थितैः मगण-सगण-रगण-सगण-तगण-जगण-नगण-गगणैरित्यर्थः, घटितं भवतीति शेषः। तदा भुजगेन्द्रेण अनन्तेन पिङ्गलाचार्य्येणेत्यर्थः, एतत् लालित्यं नाम वृत्तं भाषितं कथितम्। अत्र नामैकदेशग्रहणे नामग्रहणमिति न्यायाद् 'गु' इत्यनेन गुरुरिति बोध्यम् ॥१५८॥

(२३)

**त्रयोविंशत्यक्षरा विकृति—यथा,**

**नजभजभा जभौ लघुगुरू बुधैस्तु गदितेय'मद्रितनया' ॥१६६**

त्रयोविंशत्यक्षरेति—नजेति। यत्र नगण-यगण-भगणा जगण-भगण-जगणा भगण-लघुगुरवश्च भवन्ति, तदद्रितनया छन्दः। अर्थात् यस्याः प्रतिचरणं क्रमशः नश्च जश्च भश्च जश्च भश्च जश्च भश्च नजभजभाः नगण-जगण-भगण-जगण-भगणाः, जश्च भश्च जभौ जगण-भगणौ, लघुगुरुश्च लघुगुरू एको लगणः एको गगणश्च स्यातामित्यर्थः, इयं सा बुधैः पण्डितैः अद्रितनया तदाख्यकं वृत्तं गदिता कथिता। ग्रन्थकृन्मते निर्यतिकमिदं वृत्तम्। पिङ्गल-रत्नाकरकारौ पुनरेतद् वृत्तघटकान् गणान् निर्दिश्य एकादशभि-र्द्वादशभिश्चाक्षरैर्यतिमद् '**अश्वललितम्**' नाम किमपि वृत्तमाहतुः। अतः केदार-पिङ्गलसम्मताद् '**अश्वललिताद्**' भिन्नम् अभिन्नं वेदं वृत्तमिति संशयनिरासे छन्दोज्ञा एव प्रमाणम्। उदाहरणम्—

खरतरशौर्य्यपावकशिखापतङ्गनिभभग्नदृप्तदनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा।
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि
क्षितिवलयेऽस्ति कंसशमनस्तवेति तमवोचदद्रितनया ॥

खरेति। हे कंस! खरतरम् अतितीक्ष्णं यत् शौर्य्यं शूरत्वं तदेव पावको वह्निः, तस्य शिखायां ज्वालायां पतङ्गनिभं शलभतुल्यं यथा स्यात्तथा भग्नाः पतिताः दृप्तदनुजा उद्धतदानवा यस्य तादृशः, तथा जलधेः समुद्रस्य या सुता लक्ष्मीः, तस्या विलासवसतिः क्रीड़ालयः, तथा सतां साधूनां गतिः आश्रयरूपः, किञ्च, अशेषैः समस्तैः लोकैरिति शेषः। मान्यः माननीयः महिमा माहात्म्यं यस्य तादृशः, तथा भुवनानां जगत्त्रयस्य हितं मङ्गलं यस्मात् तादृशो यः अवतारः शरीरपरिग्रहः तस्मिन् चतुरो निपुणः, चराचरं जगत् तस्य धरः विश्वम्भरः, कृष्ण इति यावत्, इह अस्मिन् क्षितिवलये भूमण्डले तव शमनः अवतीर्ण त्वदीय प्राणविनाशकरूपेण आविर्भूत अस्ति विद्यते इति एवम् अद्रितनया हैमवती तं कंसम् अवोचत् उक्तवती। हीत्यवधारणे निश्चये वा। अत्रत्य पुरातनी वार्त्ता श्रीमद्भागवतस्य १०।५।८-१२ दशमस्कन्धे अस्ति ॥१६९॥

**यदिह नजौ भजौ भजभलगास्तदाश्वललितं हरार्कयतियुक् ॥१७०**

यदिहेति। नगण-जगण-भगण-जगण-भगण-लघुगुरव यत्र स्युस्तदाश्वललितं छन्दः। एकादशभिर्द्वादशभिश्च यतिरित्यर्थः ॥१७०

**मत्ताक्रीड़ं मौ त्नौ नौ न्लौ गिति भवति वसुशरदशयतियुतम् ॥१७१**

मत्तेति। यत्र मगणद्वयं तगण-तगणौ नगणचतुष्टयं लघुगुरुश्च भवति, तत् मत्ताक्रीड़ छन्दः। अष्टभिः पञ्चभिर्दशभिश्च यत्र यतिरित्यर्थः। अर्थात्—

**'मत्ताक्रीड़ं' वस्विष्वाशायति मयुगगयुगमनु लघुगुरुभिः।**

**म म ग ग ल ल ल ल ल ल ल ल ल ल ल ल ल ग**

यस्य प्रतिचरणं मयुगश्च गयुगश्च मनुलघवश्च गुरुश्च तैः, यथाक्रमं अवस्थितैः मगण-मगण-गगण-गगणैः चतुर्दशभिर्लगणैः, एकेन गगणेन चेत्यर्थः, घटितं भवतीति शेषः। इषवश्च आशाश्चेति इष्वाशाः, वसवश्च इष्वाशाश्च वस्विष्वाशाः तैः अष्टाभिः पञ्चदशभिश्चाक्षरैरित्यर्थः। यतिर्विरामो यत्र तादृशं तत् मत्ताक्रीड़ं तदाख्यकं वृत्तं स्यात्। अस्य मत्ताक्रीड़ेति पिङ्गल-केदारसम्मतं नाम। उदाहरणम्—

मुग्धोन्मीलन्मत्ताक्रीड़ं मधुसमयसुलभमधुरमधुरस्वाद्
गाने याने किञ्चित् स्पन्दत्पदमरुणनयनयुगलसरसिजम्।
रासोल्लासक्रीड़त्कम्रव्रजयुवतिवलयरचितभुजरसं
सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम्॥

मुग्धेति। हे भक्ताः! वृन्दारण्ये वृन्दावने रासोल्लासे रासकौतूहले क्रीड़न्त्यः विहरन्त्यः, अतएव कम्रा कामुक्यः या व्रजयुवतयः व्रजाङ्गनाः, तासां वलयेषु मण्डलेषु मण्डलाकारेणा-वस्थितासु व्रजयुवतिष्वित्यर्थः। रचितः कृतः भुजयोः बह्वोः रसः अनुरागः परस्परहस्तधारणरूप इत्यर्थः, येन तं तादृशम्, तथा न विद्यते अघः पापं यस्मात् तादृशः पापविनाशक इत्यर्थः, चरणपरिचयः चरणसेवा यस्य तथाभूतम्, किञ्च, सान्द्रः निविड़ः आनन्दः यस्मिन् तथाविधं हरिं कृष्णं स्मरत मनसि भावयत, यूयमिति शेषः। हरिं पुनः कीदृशम्? मुग्धं मनोहरं यथा स्यात्तथा उन्मीलन्ती स्फुरन्ती मत्तस्य आक्रीड़ा इव आक्रीड़ा विलासो यस्य तादृशम्, तथा मधुसमये वसन्तकाले सुलभं सुखप्राप्तं मधुरं यत् मधु मद्यं तस्य रसात् पानजनित स्वादादित्यः, गाने गीतसमये याने गमनसमये च किञ्चित् यथा स्यात्तथा स्हन्दत् अर्थाद्विचरत् स्खलच्चेत्यर्थः। 'स्पन्ददित्यत्र' अतृ प्रत्ययो दुरुपपादः स्पन्देरात्मनेपदित्वात्, पदं सुप्-तिङन्तरूपं चरणञ्च

यस्य तम्। किञ्च, अरुणं रक्तवर्णं नयनयुगलसरसिजं नेत्रारविन्द-द्वयं यस्य तादृशम् ॥१७१॥

**अत्र छन्दो मञ्जर्य्यां विशेषः—**

**इह 'सुन्दरिका' पिङ्गलमुनिनोक्ता सद्वयतो भसता ज्लभगाः।**
**स स भ स त ज ल भ ग।**

इह अस्मिन् छन्दो मध्ये यस्या प्रतिपादे सद्वयतः सगणद्वयात् परं भश्च सश्च तश्च भसताः भगण-सगण-तगणाः, तथा ज्च लश्च भश्च गश्च ज्लभगाः जगण-लगण-भगण-गगणाश्चेत्यर्थः, स्युरिति शेषः। सा पिङ्गलमुनिना सुन्दरिका तदाख्यकं वृत्तम् उक्ता कथिता।

( २४ )

**चतुर्विंशत्यक्षरा संस्कृति—यथा,**

**भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति 'तन्वी' ॥१७२**

चतुर्विंशत्यक्षरेति—भूतमुनीति। यत्र यगण-तगण-नगणाः सगणो भगणद्वयं नगण-जगणौ चैते भवन्ति, पञ्चभिः सप्तभिः द्वादशभिश्च यतिः स्यात्तत् तन्वी छन्दः। अर्थात् यदि इह अस्मिन् छन्दो ग्रन्थे छन्दसः प्रतिचरणं भश्च तश्च नश्च भतनाः भगण-तगण-नगणाः, स्च भश्च स्भौ सगण-भगणौ, भश्च नश्च यश्च भनयाः भगण-नगण-यगणाश्च स्युः, तथा भूतानि च मुनयश्च इनाः सूर्य्याश्च भूतमुनीनाः तैः पञ्चभिः सप्तभिः द्वादशभिश्चाक्षरै-रित्यर्थः। यति विरामश्च भवेत्, तदा तन्वी तन्नामकं वृत्तं भवति। उदाहरणम्—

माधवमुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः
कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यविगततनुदाहा।
पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूनै-
र्निश्वसती सा मुहुरतिपरुषं ध्यानालये तव निवसति तन्वी॥

माधवेति। हे माधव! लक्ष्मीपते! तन्वी क्षीणाङ्गी सा राधा मुहुः अनिशम् अतिपरुषम् अतिदारुणम् यथा स्यात्तथा निश्वसती दीर्घश्वासं त्यजन्ती सती तव भवतः लीयते अनेनेति लयो योगश्चित्तवृत्तिनिरोध इत्यर्थ। ध्यानेन त्वच्चिन्तनेन यो लयः ध्यानलयः, तस्मिन् ध्यानयोगे इत्यर्थः, निवसति तिष्ठति, ध्यानयोगमाश्रित्य वर्त्तत इत्यर्थः। उपरतेतर वृत्तिना चित्तेन त्वामेव ध्यायतीति परमार्थः।

कथम्भूता? मुग्धैः अतिमनोहरैः मधुकरविरुतैः भ्रमरगुञ्जितैः तथा कोकिलकूजितानि मलयसमीराश्च तैः कोकिलकूजितमलय-समीरैश्च कम्पमुपेता प्राप्ता, तद्भयात् कम्पितेति भावः। तथा मलयजश्चन्दनः, तस्य सलिलैः चन्दनमिश्रितजलैरित्यर्थः। प्लावनतोऽपि सेकादपि अविगतः अनपगतः तनुदाहः गात्रसन्तापः यस्यास्तथाभूता, किञ्च, देहजः शरीरोत्पन्नः यः संज्वरः अर्थात् कामजनितसन्तापः तस्य भरेण अतिशयेन परिदूनैः शुष्कैरित्यर्थः। पद्मपलाशैः कमलपत्रैः विरचितं निर्मितं शयनं शय्या यया तादृशीत्यर्थः ॥१७२॥

अत्र छन्दो मञ्जर्य्यां विशेषः—

**नाम 'किरीट'मिदं भगणा यदि पिङ्गलनागमुनीन्द्रमतं किल।**
**भ भ भ भ भ भ भ भ। (१)**

नामेति। यदि छन्दसः प्रतिपादं भगणाः अर्थात् अष्टाविति शेषः स्युः, तदा किरीटं नाम वृत्तं भवेत्, इदम् एतत् पिङ्गल-

नागमुनीन्द्रमतम्। किलेति ऐतिह्ये। (१)

**सगणैरिह वृत्तवरं वसुभिः किल 'दुर्मिल'मुक्तमिदं कविभिः।**

**स स स स स स स स। (२)**

सगणैरिति। इह अस्मिन् छन्दो ग्रन्थे यस्य प्रतिचरणं वसुभिः अष्टाभिः सगणैः घटितं भवतीति शेषः, इदं वृत्तवरं छन्दः श्रेष्ठं कविभिः काव्यनिर्मातृभिः दुर्म्मिलं तन्नामकं उक्तं कथितम्। दुःखेन आयासेन प्राग्भवीयसुकृतिवशादित्यर्थः। मिलति श्लोक-कर्त्तुर्मनसि उदेतेति व्युत्पत्तिरत्र द्रष्टव्या। (२)

(२५)

**पञ्चविंशत्यक्षराऽतिकृति—यथा,**

**क्रौञ्चपदा भ्मौ स्भौ ननन: न्गा**

**विधुशरवसुमुनिविरतिरिह भवेत् ॥१७३**

पञ्चविंशत्यक्षरेति—क्रौञ्चेति। यत्र भगण-मगणौ सगण-भगणौ चत्वारो नगणा गुरुश्चैते स्युः। पञ्चभिः पञ्चभिरष्टभि सप्तभिश्च यतिः, तत् क्रौञ्चपदा छन्दः। अर्थात्—

**'क्रौञ्चपदा' स्याद् भो मसभाश्चेदिषु**

**शरवसुमुनियतिरिन लघुगैः।**

**भ म स भ ल ल ल ल ल ल ल ल ल ल ल ल ग।**

यस्याः प्रतिपादं इन लघवश्च गश्च इनलघुगाः, तैः परवर्त्तिभिः द्वादशभिर्लगणैः एकेन गगणेन चेत्यर्थः, सहेति शेषः, भः एको भगणः, तथा मश्च सश्च भश्च मसभाः, मगण-सगण-भगणाश्च स्युः, किल चेत् यदि इषवश्च शराश्च वसवश्च मुनयश्चेति

इषशरवसुमुनयः, तैः पञ्चभिः पञ्चभिः अष्टभिः सप्तभिश्चाक्षरैरित्यर्थः। यतिर्विरामश्च स्यात्, सा क्रौञ्चपदा तदाख्यकं वृत्तं भवति। उदाहरणम्—

क्रौञ्चपदालीचित्रिततीरा मदकलखगकुलकलकलरुचिरा
फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी।
फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः
पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिमकिरणजा॥

हे हरे कृष्ण! क्रौञ्चानां वकभेदानां या पदालयः चरणश्रेणयः, ताभिः चित्रितम् अङ्कितम् तीरं तटप्रदेशो यस्याः सा क्रौञ्चपदालीचित्रिततीरा, तथा मदकलखगकुलकलकलरुचिरा मदकलं मदमत्तं यत् खगकुलं पक्षिसङ्घः, तस्य कलकलैः कलध्वनिभिः, रुचिरा हृदयग्राहिणीत्यर्थः। तथा फुल्लसरोजश्रेणिविलासा फुल्लानि विलसितानि यानि सरोजानि पद्मानि, तेषां श्रेणिभिः समूहैः विलासः शोभा यस्याः तादृशी, तथा मधुमुदितमधुपरवरभसकरी मधुमुदिता पुष्परसपानहृष्टाः ये मधुपा भृङ्गाः, तेषां रवेण गुञ्जनध्वनिना रभसकरी हर्षजनिका रभसो हर्षवेगयोरित्यमरः। किञ्च, फेनविलासप्रोज्ज्वलश्चासौ हासश्चेति प्रोज्ज्वलहासः अत्युज्ज्वलहास्यं यस्याः सा तथोक्ता, तथा ललितलहरिभरपुलकिततनुः ललितः अतिसुन्दरः यो लहरिभरः तरङ्गातिशयः, तेन पुलकिता सञ्जातपुलका, रोमाञ्चिता, किञ्च, तरलगतिः तरला चञ्चलागतिः प्रवाहो यस्याः सा तथोक्ता असौ अहिमकिरणजा सूर्य्यतनया कालिन्दीत्यर्थः। कस्य जनस्येति शेषः। चेतो मानसं न हरति? कं जनं न मोहयति? इति पश्य आलोकय॥१७३॥

(२६)

**षड्विंशत्यक्षरोत्कृति—यथा,**

**वस्वीशाश्वैश्छेदोपेतं ममतननयुग**
**रसलगैर्भुजगविजृम्भितम् ॥१७४**

षड्विंशत्यक्षरेति—वस्वीशेति। यत्र मगणद्वयं तगण-नगणत्रयं रगण-सगणौ लघुगुरू चैते भवन्ति, तद् भुजङ्गविजृम्भित छन्दः। अष्टभिरेकादशभिः सप्तभिश्च तत्र यतिः। अर्थात् यस्य प्रतिचरणं मश्च मश्च तश्च नश्च नयुगञ्च रश्च सश्च लश्च गश्च ते ममतनगणत्रयं रसलगाः तैः घटितं स्यादिति शेषः, वसवश्च अश्वाश्च तैः अष्टाभिः एकादशभिः सप्तभिश्चाक्षरैरित्यर्थः। छेदोपेतं विच्छिन्नं तद्भुजङ्गविजृम्भितं नाम वृत्तं भवति। उदाहरणम्—

हेलोदञ्चन्नचत्पादप्रकटविकटनटनभरो रणत्करतालक-
श्चारुप्रेङ्खच्चूड़वर्हः श्रुतितरलनवकिसलयतरङ्गितहारधृक्।
त्रस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युतः
पायाद्वश्छिन्दन् कालिन्दीह्लदकृतनिजवसतिबृहद्भुजङ्गविजृम्भितम् ॥

हेलोदञ्चेति। अच्युतः कृष्णः कालिन्दीह्लदे कृता विहिता निजवसतिः स्वकीयवासो येन स कालिन्दीह्लदकृतनिजवसतिः, स चासौ बृहद्भुजङ्गः महान् सर्पश्चेति तस्य, यमुनाह्लदे विहित-वसतिकस्य विपुलकायकालियस्येत्यर्थः। यद् विजृम्भितं चेष्टितं दंशनोद्‌योगमित्यर्थः, तत् छिन्दन् व्यर्थी कुर्वन्निति भावः। वः युष्मान् पायात् रक्षतात्। अच्युतः कथम्भूतः? हेलोदञ्चन्नचत् पादप्रकटविकटनटनभरः, हेलया अनायासेन उदञ्चन् उद्‌गच्छन् न्यञ्चन् अधोगच्छन् च उदञ्चन्नचञ्चन्तौ नमदुन्नमन्तावित्यर्थः, पादौ चरणद्वयं यस्मिन् तादृशः, अतएव प्रकट प्रकाशमानः विकटः

भयङ्करः नटनभरः नृत्याधिक्यं यस्य तथाभूतः, तथा रनन् शब्दायमानः करयोः हस्तयोः तालः लयादिसूचकध्वनिविशेषो यस्य स रणत्करतालकः। अत्र बहुव्रीहौ क-प्रत्ययः। किञ्च, चारुप्रेङ्खच्चूड़ावर्हः नृत्यरभसात् चारु यथा स्यात्तथा प्रेङ्खद्दोलायमानमित्यर्थः। चूड़ावर्हं चूड़ास्थितमयूरपिच्छं यस्य तथोक्तः, तथा श्रुतितरलनवकिशलयः श्रुत्योः श्रवणयोः तरलौ चञ्चलौ नवौ नूतनौ किसलयौ पल्लवौ यस्य तादृशः, तथा तरङ्गितहारधृक् तरङ्गितः सञ्जाततरङ्गः वक्षसि एतदुत्पतन्नित्यर्थः। यो हारः तं धरतीति तथाविधः, किञ्च, त्रस्यन्त्यः कालियनिसूदनाद् बिभ्यन्त्यः या नागस्त्रियः सर्पाङ्गनाः, ताभिः भक्त्या अनुरागविशेषेण मुकुलितम् अञ्जलीकृतं करकमलयुगं हस्तपद्मयुगलं यस्मिन् कर्मणि तद् यथा स्यात्तथा कृता विहिता स्तुतिः स्तवो यस्मै तादृश इत्यर्थः ॥१७४॥

**मो नाः षट् सगगिति यदि नवरसरस**

**शरयतियुतमपवाहाख्यम् ॥१७५**

**एतानि पञ्चसप्तत्यधिकशतच्छन्दांसि।**

मो ना इति। यत्र मगणो नगणषट्कं सगणो गुरुयुग्मश्च भवति, तदपवाहाख्य छन्दः। नवभिः षड्भिः पञ्चभिश्च तत्र यतिः। अर्थात् यस्य प्रतिपादं क्रमशः मः एको मगणः, षट् नाः नगणाः, तथा सश्च गश्च ग्च तेषां समाहारः सगग् इति च गणाः स्युः, तद् यदि चेद् नव च रसाश्च रसाश्च शराश्च तैः नवभिः षड्भिः षड्भिः पञ्चदशभिश्चाक्षरैरित्यर्थः। यतियुतं यतिमद् भवेत्, तदा अपवाहाख्यम् अपवाहनामकं वृत्तं भवति। पिङ्गलेऽस्य 'अपवाहकः' इति नाम। उदाहरणम्—

श्रीकण्ठं त्रिपुरदहनममृतकिरणशकलललितशिरसं रुद्रं
　　भूतेशं हतमुनिमखमखिलभुवननमितचरणयुगमीशानम्।
सर्वज्ञं वृषभगमनमहिपतिकृतवलयरुचिरकरमाराध्यं
　　तं वन्दे भवभयमिदमभिमतफतवितरणगुरुमुमया युक्तम्॥
(पिङ्ग० ७ अ० ३२ सू० ३०)

## अथ दण्डकाः (१७६-१८८)

**यदिह न-युगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो (१)**

अथ दण्डका व्याख्यायन्ते—यदि हेते। नगण-द्वयेन रगण-सप्तकेन च चण्डवृष्टिप्रपातो नाम दण्डकः। अर्थात् षड्विंशत्यक्षर पर्य्यन्तान्युक्थानि छन्दांसि प्रदर्श्य सम्प्रति तदतिरिक्तसप्तविंशत्यक्षर-घटितदण्डकस्वरूप विवक्षया कथयति—अथेति। तत्र च चण्ड-वृष्टिप्रपातं नाम प्रथमं दण्डकं निरूपयति—यदिहेति। यद् यदि इह अस्मिन् दण्डकप्रकरणे छन्दसः प्रतिपादं आदौ नयुगलं द्वौ नगणौ, ततस्तदनन्तरं सप्तरेफा रगणाश्च स्युः, तदा चण्डवृष्टिप्रपात स्तदाख्यकः दण्डको भवेत्। अत्र पादान्ते यतिः। रातमाण्डव्या-भ्यामृषिभ्यामन्यत्रास्याभिधानमेतदेव। ताभ्यां पुनरन्यैव संज्ञा कृताऽस्य वृत्तस्य इति हलायुधः। उदाहरणम्—

प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं
सपदि समवलोक्य सव्येन हस्तेन गोवर्धनं नाम शैलं दधल्लीलया॥
कमलनयन रक्षरक्षेति जल्पत्रसन्मुग्धगोपाङ्गनालिङ्गनानन्दितो
गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय वः॥

प्रलयेति। गोकुलं व्रजं गोसमूहं वा प्रलये कल्पावसाने वा घनघटा मेघसमूहः, तस्या इव महांश्चासावारम्भश्चेति महारम्भः महान् उपक्रमो यस्याः तादृशी वा मेघावली मेघमाला,

तस्याः चण्डवृष्टिप्रपातेन उत्कटवर्षापतनेन आकुलं सन्त्रस्तं समवलोक्य दृष्ट्वा, सपदि सद्यः तत्क्षण एवेति यावत्, सव्येन वामेन हस्तेन बाहुना गोवर्धनं नाम शैलं पर्वतं लीलया अनायासेन दधन् आलम्बमानः 'हे कमलनयन, रक्ष रक्ष' इति एवं जल्पन्त्यस्त्रसन्त्यश्च या मुग्धगोपाङ्गना ऋजुस्वभावा गोपस्त्रियः, ताभिरालिङ्गनेन तत्कृतपरिष्वङ्गेणेत्यर्थः। आनन्दितः हृष्टः, तथा गलन्तः क्षरन्तः ये अभिनवधातवः नूतनगौरिकादिधातवः, तेषां धाराभिः प्रस्रवैः विचित्रः शवलीकृतः अङ्गरागः यस्य तादृशः, मुरारातिः मुरारिः कृष्ण इत्यर्थः। वः युष्माकं प्रमोदाय हर्षाय अस्तु भवतु। एतादृशः कृष्णो युष्माकमानन्दातिशय-मुत्पादयत्वित्यर्थः। (१)

**भवेद्दण्डकः। प्रतिचरणविवृद्धरेफाः**

**स्युरर्णोऽर्णवव्याजीमुतलीलाकरोद्दाम-शङ्खादयः (२-८)**

प्रतिचरणेति। नगणद्वय-रेफ-सप्तकानन्तरमेकैकरेफवृद्धौ क्रमादर्णादिनामानः सप्तदण्डका भवन्तीत्यर्थः। आदिपदात् पञ्चभीरेफैरम्बुज नाम दण्डकः। एकोनसहस्राक्षरी यावत् पादो भवेत् तावद् यथेष्टकल्पिताभिधानाः दण्डका भवन्ति। अभिधान-कल्पना चेयं—आराम-संग्राम-सुराम-वैकुण्ठ-सौकण्ठ-सारकासा-रेत्याद्याः। यदुक्तं 'एकोनसहस्रक्षरपर्य्यन्ता दण्डकाङ्घ्रयः प्रोक्ताः। वर्णाधिकगणवृद्धया नद्वितयाद्या महामतिभिरिति ॥२-८॥

अयमत्राभिप्रायः—पूर्वमेकैकाक्षरक्रमेण छन्दसां वृद्धिरभिहिता, सम्प्रति रगणोपलक्षितेनाक्षरत्रयेण वृद्धिरुच्यते। सूत्रार्थः—प्रतिचरणं प्रतिपादं विवृद्धः वृद्धिं गतः रेफः एको रगणो येषां ते तथोक्तः, अर्णोऽर्णवव्यालजीमुतलीलाकरोद्दामशङ्खादयः, अर्णवश्च व्यालश्च जीमुतश्च लीलाकश्च उद्दामश्च शङ्खश्चेति ते आदयो

येषां तादृशाः, दण्डका इति शेषः, स्युरित्यर्थः। इतः प्राक् 'यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः' इत्येतल्लक्षणश्चण्डवृष्टिप्रपातो नाम दण्डको विवृतः। अर्णोऽर्णव-प्रभृतिदण्डकेषु योजनीयाः। एवञ्च यस्य प्रथमे पादे द्वौ नगणौ अष्टौ रगणाः, द्वितीये द्वौ नगणौ नवरगणाः, तृतीये द्वौ नगणौ दश रगणाः, चतुर्थे च द्वौ नगणौ एकादश रगणाः, स अर्णो नाम दण्डकः। तथा यस्य प्रथमे पादे द्वौ नगणौ द्वादशरगणाः, द्वितीये द्वौ नगणौ त्रयोदशरगणाः, तृतीये द्वौ नगणौ चतुर्द्दशरगणाः, चतुर्थे च द्वौ नगणौ पञ्चदशरगणाः स्युः, सः अर्णवो नाम दण्डकः स्यात्। एवं व्यालादिष्वपि ज्ञेयमिति फलितार्थः। अत्रेदमवधेयम् —लक्षणस्यास्य निरुक्तरूपव्याख्याने एकत उदाहरणश्लोके लक्षणा-सङ्गतिः, अपरतश्च 'भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम्' इति विषमवृत्तेषु दण्डकानामन्तर्भावः। तेन च ग्रन्थान्तरे दण्डकानां समवृत्तमध्ये परिगणितत्वात् तद्विरोधोऽपि स्यात्। अतएव 'प्रतिचरणविवृद्धरेफा' इत्यत्र प्रतिदण्डकं चरणेषु पादेषु विवृद्धः वृद्धिं गतः, रेफः एक रगणो येषु, इति विग्रहविशेषः कल्पनीयः। सति चैवं प्रकृतिभूते चण्डवृष्टिप्रपाते चेदेको रगणोऽधिकस्तदा अर्णो नाम, द्वौ चेदधिकौ अर्णवो नाम, त्रय-श्चेदधिकः व्यालो नाम दण्डकः स्यात्, एवं जीमूतादिष्वपीति फलितार्थो भवति—इति। अमुमेवार्थमवलोक्य वृत्तरत्नाकरटीकायां नारायणभट्टोऽपि "यद्यपि प्रतिचरणं विवृद्धौ रेफो रगणो येषु ते तथेति व्युत्पत्त्या प्रथमे पादे नौ ततोऽष्टौ रेफाः, द्वितीये नव तृतीये दश, चतुर्थे एकादशेति वृद्धिरित्यर्थः प्रतीयते, तथाऽपि ग्रन्थान्तरविरोधात् प्रतिदण्डकं चरणेषु विवृद्धा रेफा येषु—इति विग्रहेणोत्तरोत्तरदण्डकेषु चरणचतुष्टयेऽप्येकैकरेफवृद्धिरित्यर्थाश्रयणेन ग्रन्थान्तराविरोधः कार्य्यः, ततश्च नाभ्यां रगणाष्टकेन च घटित-

पादोऽर्णाख्यो दण्डकः, रगणनवकेनार्णवः, दशभिर्व्यालः, एकादशभिर्जीमूतः, द्वादशभिर्लीलाकरः, त्रयोदशभिरोद्दामः, चतुर्द्दशभिः शङ्खः। सर्वत्राऽऽदौ नगणद्वयं कार्य्यम्" इत्याह। अत्राऽऽदि शब्दादारामादयः पञ्चविंशत्यधिकशत-त्रयसंख्यका दण्डका ज्ञेयाः। यदाह स एव—"अत्राऽऽदिशब्दात पञ्चदशादिगगैराराम-संग्राम-सुराम-वैकुण्ठ-सोत्कण्ठ-सार-कासार-विस्तार-संहार-मन्दार-केदार-साधार-सत्कार-संस्कार-माकन्द-गोविन्द-सानन्द-सन्दोह-नन्दे-त्येवमादिनामका एकैक-रगणवृद्धच नद्वयोत्तरकत्रिंशदधिकशतत्रय रगण-घटितैकोनसहस्राक्षरपादपर्य्यन्तं कविप्रयोगानुसारेण दण्डका ज्ञेयाः। यदाहुः—

**एकोनसहस्राक्षरपर्य्यन्ता दण्डकाङ्घ्रयः प्रोक्ताः।**

**वर्णत्रिकगणवृद्धचा नद्वितयाद्या महामतिभिः॥ इति**

तथा च—रगणघटिता दण्डकाः पञ्चविंशत्यधिकशतत्रय-संख्यका भवन्ति। एवं यगणादिघटितदण्डका अपि इति।

उदाहरणम्—

जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासाच्युतानन्त नारायण
त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर श्रीपते माधव।
गरुड़गमन कृष्ण वैकुण्ठ गोविन्द विश्वम्भरोपेन्द्र चक्रायुधाधोक्षज श्रीनिधे
बलिदमन नृसिंह शौरे भवाम्भोधिघोरार्णसि त्वां निमज्जन्तमभ्युद्धरो-पेत्य माम्॥

एवमर्णवादीनामप्युदाहरणानि बोध्यानि।

उदाहरणमारचयति—जय जयेति। जय जय सर्वोत्कर्षेण वर्त्तस्व। त्वम् उपेत्य समीपमागत्य, भवः संसारः, स एव अम्भोधिः समुद्रः, तस्य घोरे भयानके अर्णसि पयसि निमज्जन्तं बुडमानं माम् अभ्युद्धर त्रायस्वेत्यर्थः। अन्यत् सर्वं सुगमम्।

**'प्रचितक' सम्भिधो धीरधीभिः स्मृतो दण्डको**
**न द्वयादुत्तरैः सप्तभिर्यैः ॥८६ न न य य य य य य य ।**

प्रचिकेति। नगणद्वयेन यगण-सप्तकेन च प्रचितकाख्यो दण्डक इत्यर्थः। अर्थात् यस्य प्रतिचरणे नद्वयात् आदौ वर्त्तमानात् नगणद्वयात् उत्तरैः परवर्त्तिभिः सप्तभिः यैः यगणैः घटितं भवतीति शेषः, स धीरा धीर्येतैः धीरधीभिः स्थिरबुद्धिभिः पण्डितैरित्यर्थः। 'प्रचितकम्' इति समभिधासंज्ञा यस्य तादृषः प्रचितकनाम नामक इत्यर्थः। दण्डकः स्मृतः कथितः। उदाहरणम्—

मुरहर यदुकुलाम्भोधिचन्द्र प्रभो देवकीगर्भरत्न त्रिलोकैकनाथ
प्रचितकपटसुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणे केशरीन्द्र।
चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकारः
प्रणतजनपरितापोग्रदावानलोच्छेदमेघ प्रसीद प्रसीद प्रसीद ॥

मुरहरेति। मुरहर मुरारे, यदुकुलं यदुवंश, तद् एव अम्भोधिरर्णवः, तस्मिन् चन्द्रः विधुरिव, तत् सम्बुद्धौ हे यदुकुलाम्भोधिचन्द्र, हे प्रभो! निग्रहानुग्रहकारिन्, हे देवकी-गर्भरत्न देवकीजठरमणे, हे त्रिलोकैकनाथ, त्रिभुवनैकशरण, प्रचितं प्रकटीकृतं कपटं कैतवं यैः ते प्रचितकपटाः, मायिन इत्यर्थः। ते च सुरारयो दानवाश्चेति प्रचितकपटसुरारयः, तेषां यो व्रजः समूहः, स एव उद्दामः मदोद्धतः दन्तावलस्तोमः गजसमूहः, तस्य विद्रावणे विनाशने केशरीन्द्रः सिंहराजस्वरूप इत्यर्थः। तत् सम्बुद्धिः, तथा चरणानां पदानां ये नखरा नखाः, त एव सुधांशवः चन्द्राः, तेषां छटायाः दीप्तेः उन्मेषेण प्रकाशेन निःशेषितः शेषप्रापितः विनाशित इत्यर्थः। ध्यायिनां ध्यानपराणां, योगिनामित्यर्थः। चेतोनिविष्टः मानसस्थितः अन्धकारः

विघटिततिमिरं येन तत् सम्बुद्धौ हे चरणनखरसुधांशुच्छटोन्मेष निःशेषितध्यायिचेतोनिविष्टान्धकारः। किञ्च, प्रणतजनानां भक्तजनानां यः परितापः आध्यात्मिकाधिभौतिकाधिदैविक-तापत्रयमित्यर्थः, स एव उग्रदावानलः उत्कटवनाग्निः तस्य उच्छेदे विनाशे निर्वापणे इति यावत्, मेघः वारिदस्वरूप इति, तत् सम्बोधने हे प्रणतजनपरितापोग्रदावानलोच्छेदमेघ, त्वं प्रसीद प्रसीद प्रसन्न भव। अत्र भक्त्यतिशयसूचनार्थं प्रसीदेत्यस्य वारत्रयमुक्तिः ॥९॥

**यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते**

**बुधैरशोकपुष्पमञ्जरीति ॥१०**

एवं नियतवर्णपादान् दण्डकानुक्त्वाथानियतवर्णपादांस्तानाह—यत्रेति। क्रमेण गुरु-लघ्वोर्यादृच्छिके निवेशऽशोकपुष्पमञ्जरी नाम दण्डकमञ्जरीत्यर्थः। अर्थात् यत्र यस्मिन् दण्डके प्रतिपादं क्रमात् क्रमेण गुरोः गुरुवर्णात् परः लघुरेको ह्रस्ववर्णः दृश्यते, बुधैः पण्डितैः सः अशोकपुष्पमञ्जरी इति प्रसिद्धदण्डक उच्यते कथ्यते। उदाहरणम्—

मूर्ध्नि चारुचम्पकस्रजा सलोलवेष्टनं लसल्लवङ्गचारुचन्द्रिकाः कचेषु कर्णयोरशोकपुष्पमञ्जरीवतंसको गले च कान्तकेशरोपक्लृप्तदाम।
फुल्लनागकेशरादिपुष्परेणुरूषणं तनौ विचित्रमित्युपात्तवेश एव केशवः पुनातु वः सुपुष्पभूषितः समूर्त्तिमानिवाऽऽगतो मधुर्विहर्तुमत्र॥

मूर्ध्नि शिरसि चारुः मनोहारिणी या चम्पकस्रक् चम्पकमाला तया सलीलवेष्टनं सविलासबन्धनम्, तथा कचेषु केशेषु 'कचः केशः शिरोरोहः' इत्यमरः। लसन्ति शोभमानानि लवङ्गानि लवङ्गपुष्पाणि चारुचन्द्रिका मनोहरमल्लिकापुष्पाणि

ञ्च, तथा कर्णयोः श्रवणयोः अशोकपुष्पमञ्जरीवतंसकः अशोक-कुसुमवल्लरीकृतभूषणम्, किञ्च, गले कण्ठे कान्तानि मनोज्ञानि यानि केशराणि वकुलपुष्पाणि, तैः उपक्लृप्तं रचितं दाम माल्यम् तथा तनौ देहे विचित्रं मनोहरं फुल्लानि विकसितानि यानि नागकेशरादीनि पुष्पाणि तेषां रेणुभिः परागैः रूषणं रञ्जनम्, इति इत्थम्, उक्तप्रकारेणेत्यर्थः, उपात्तः गृहीतः वेशो नेपथ्यं येन तादृशः, आकल्पवेशौ नेपत्थमित्यमरः। सुपुष्पभूषितः मनोहर-कुसुमालङ्कृतः अत्र अस्मिन् वृन्दारण्ये इत्यर्थः। विहर्त्तुम् आगतः विहरणार्थमुपस्थितः मूर्त्तिमान् शरीरी सम्प्रसिद्धः मधुर्वसन्तर्त्तुरिव स्थितः एष केशवः कृष्णः वो युष्मान् पुनातु पवित्रयतु ॥१०॥

**सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः**

**कुसुमस्तवकम् ॥११ स स स स स स स स स।**

सगण इति। अनियतैः रगणैः कुसुमस्तवकं नाम दण्डक इत्यर्थः। अर्थात् यत्र यस्मिन् दण्डके प्रतिपादं सकलः सर्वः नवसंख्यक इत्यर्थः, सगणः भवेत्। इह अस्मिन् छन्दो ग्रन्थे बुधाः पण्डिताः तं कुसुमस्तवकं तन्नामकं दण्डकं प्रवदन्ति खलु कथयन्ति हि। उदाहरणम्—

विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः कुचकुड्मलगो
भ्रमरप्रकरेण यथावृतमूर्त्तिरशोकलताविलसत्कुसुमस्तवकः।
स नवीनतमालदलप्रतिमच्छवि विभ्रदतीव विलोचनहारि वपु-
श्चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः॥

विरराजेति। यदीयकरः यस्य हस्तः कनकद्युतिबन्धुरा सुवर्णप्रभावन् मनोज्ञा, 'बन्धूर बन्धुरौ रम्ये' इति कोषः। या वामदृक् वामलोचना, राधा इत्यर्थः। तस्याः कुचकुड्मलगः स्तनकोरकगतः सन्। भ्रमरप्रकरेण भृङ्गसमूहेन आवृता

आच्छादिता मूर्त्तिः शरीरं यस्य तादृशः, अशोकलतायाः अशोक-वल्लयाः विलसत्कुसुमस्तवकः यथा शोभमानपुष्पगुच्छ इव विराज शोभितो बभूव, सनवीनं नूतनं यत् तमालदलं तमालपत्रं तत् प्रतिमा तत् सदृशी छविः कान्तिर्यस्य तादृशम्, अतीवविलोचनहारि अत्यन्तनयनानन्ददारकं वपुः शरीरं बिभ्रत् कारयन्, तथा चपला रुचिरा विद्युन्मनोहरा या अशोकवल्लीः वसनलता, तस्या धरः, पीतवसन इत्यर्थः। हरिः कृष्णः मम इदं मदीयं मत्सम्बन्धीत्यर्थः। यत् हृदम्बुजं हृदयपद्मं तस्य मध्यं गतः प्राप्तः अस्तु भवतु। कृष्णो निरन्तरं मम मानने निवसतु इत्यर्थः ॥११॥

**यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको मत्तमातङ्गलीलाकरः ॥१२॥** र-र-र र-र-र र-र-र।

यत्र रेफ इति। अनियतैः रगणैर्मत्तमातङ्गलीलाकरो नाम दण्डको इत्यर्थः। अर्थात् यत्र यस्मिन् दण्डके प्रतिचरणं रेफः रगणः परं केवलं स्वेच्छया प्रयोक्तुरिच्छया गुम्फितः मालाकारेण ग्रथितः स्यात्, नवसंख्यका रगणाः स्युरित्याशयः, स मत्तमातङ्ग लीलाकरस्तन्नामकः दण्डकः स्मृतः कथितः, कविभिरिति शेषः। एवमादिषु लक्षणेषु 'स्वेच्छया' कवीच्छानुरोधादित्यवमादिपदै-श्छन्दाषामेषामनियतः प्रयोगभाषायमिति ज्ञाप्यते। उदाहरणम्—

हेमगौरं वसानोंऽशुकं शक्रनीलासिते वर्ष्मणि स्पष्टदिव्यानुलेपाङ्किते
तारहारांशुवक्षोनभश्छिन्नमालाञ्चितो भव्यभूषोज्ज्वलाङ्गः समं सीरिण।
अञ्जताभाम्बुरेणेन्दुकुन्दाभदेहेन लीलापरीहासोर्म्मिकौतूहलैः
कंसरंगाद्रिगः पातु वश्चक्रपाणिर्गतिक्रीड़या मत्तमातङ्गलीलाकरः ॥

हेमेति। शक्रनीलम् इन्द्रनीलमणिः, तद्वदंसिते कृष्णवर्णे 'कृष्णो नीलासितश्यामकालश्याममेवकाः, इत्यमरः, स्पष्टः

अत्युज्ज्वलः दिव्यः मनोहरश्च यः अनुलेपः अनुलेपनद्रव्यम्, तेन तेन अंकिते चिह्निते लिप्ते इति यावत्, वर्ष्मणि शरीरे 'शरीरं वर्ष्म विग्रहः' इत्यमरः। हेयगौरं सुवर्णवत् पीतवर्णम् अंशुकं वस्त्रं वसानः परिदधत्, तथा तारः प्रदीप्तः हारस्य मुक्तादिघटित मालायाः अंशुः किरणो यत्र तादृशं वक्षः वक्षःस्थलम्, तदेव नभः आकाशम्, तत्र चित्रा विचित्रा या माला वनमाला, तया अन्वितः शोभितः। किञ्च, भव्या मनोज्ञाः या भूषाः भूषणानि, ताभिः, उज्ज्वलं दीप्तिमत् अङ्गं शरीरं यस्य ताधृशः, तथा अञ्जनाभं कज्जलसदृशं नीलवर्णमित्यर्थः। अम्बरं वसनं यस्य तथाभूतेन, इन्दुः चन्द्रः कुन्दः माघभवपुष्पविशेषश्च तदाभः देहः शरीरं यस्य तेन च सीरिणा बलरामेण समं सह लीलापरीहासानां क्रीड़ानर्म्म-वचसां हासानां हास्यानाञ्च ऊर्म्मिभिः परस्पराभिः कुतूहलैश्च करणैः, कंसस्य कंसासुरस्य यो रङ्गः युद्धभूमिः स एव अद्रिः पर्वतः तत्र गच्छतीति तादृशः, अतएव गतिक्रीड़या गमनलीलया मत्तमातङ्गलीलाकरः मत्तो यो मातङ्गः हस्ती तस्य लीलां करोतीति तथोक्तः, मत्तमातङ्गलीलामनुकुर्वाण इत्यर्थः। चक्रपाणिः कृष्णः वो युष्मान् पातु रक्षतु ॥१२॥

**लघुर्गुरुर्निजेच्छया यदा निवेश्यते तदैव दण्डको**

**भवदनङ्गशेखरः ॥१३**

**लग लग लग लग लग लग लग लग लग लग लग लग लग लग**

त्रयोदशदण्डकाः। इत्थं चाष्टाशीत्यधिकशतसंख्यानीमानि ॥१८८॥ इति श्रीछन्दः कौस्तुभे वर्णच्छन्दसि समवृत्ताख्या द्वितीया प्रभा ॥२॥

लघुरिति। लघु-गुर्वोः क्रमादैच्छिके निवेशे सत्यनङ्ग-शेखराख्या दण्डक इत्यर्थः ॥१३॥

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये समवृत्तव्याख्या द्वितीया प्रभा ॥२॥**

अर्थात् यदा यस्मिन् काले प्रतिचरणं निजेच्छया स्वेच्छया लघुर्गुरुः आदौ एको लघुवर्णस्तदनन्तरम् एको गुरुवर्णः एवं क्रमेण निवेश्यते प्रयोक्त्रा विन्यस्यते, तदा एष निरूप्यमाणो दण्डकः अनङ्गशेखरस्तन्नामको भवति। उदाहरणम्—

उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके विजृम्भमाणगौरदीधिती
रतिस्वहस्तनिर्मितः कलाकुतूहलेन चारुचम्पकैरनङ्गशेखरः किमु।
इति प्रमोदकारिणीं प्रियाप्रसादलक्षणां गिरं समुद्गिरन्मुरारिरद्भुतां
प्रदोषकालसङ्गमोल्लसन्मना मनोजकेलिकौतुकी करोतु वः कृतार्थताम् ॥

उदेत्यसाविति। हे राधिके! अद्य सम्प्रति पुरः अग्रभागे पूर्वस्यां दिशि वा, विजृम्भमाणाः प्रकाशमानाः गौरदीधितयः शुभ्रकिरणा यस्य तादृशः, सुधाकरः चन्द्रः उदेति उद्गच्छति इति विलोकय पश्य। असौ सुधाकरः कलासु शिल्पकर्मसु यत् कुतूहलं कौतुकं तेन हेतुना चारुचम्पकैः मनोहरचम्पकपुष्पैः करणैः रत्या कामप्रियया स्वहस्तनिर्मितः निजहस्तरचितः अनङ्गशेखरः कामस्य शिरोभूषणं किमु किम्? इति एवं प्रमोदकारिणीम् आनन्दविधायिनीं प्रियाप्रसादलक्षणां प्रियाया राधिकायाः यः प्रसादः अनुग्रहः मानपरित्यागरूप इत्याशयः, तल्लक्षणां प्रसन्नता-विधायिनीमित्यर्थः, अद्भुतां विस्मयजनिकां गिरं वाचं समुद्गिरन् ब्रूवन् अतएव मनोजकेलिकौतुकी मनोजकेलौ कामक्रीड़या कौतुकी कुतूहली सन् प्रदोषकाले रजनीमुखे 'प्रदोषो रजनीमुखम्' इत्यमरः। यः सङ्गमः मिलनं तत्र उल्लसत् उत्सुकं मनो मानसं यस्य तादृश, मुरारिः कृष्णः वः युष्माकं कृतार्थतां साफल्यं करोतु विदधातु इत्यर्थः ॥१३॥

**छन्दो मञ्जर्य्यामत्र विशेषः—**

**यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धोऽपरो दण्डकः सिंहविक्रीड़नामा। (१) य य य य य य य य य य।**

यकारैरिति। यस्य प्रतिपादं कवीनां काव्यनिर्मातृणाम् इच्छानुरोधात् अभिप्रायानुसारात् निबद्धैः मालाकारेण ग्रथितैः, अर्थाद्दशभिरित्ति भावः। यकारैः यगणैः घटितं भवतीति शेषः, स अपरः अन्यः उक्तविलक्षण इत्यर्थः। विशुद्धः दोषविहीनः सिंहविक्रीड़नामा सिंहविक्रीड़ाख्यः दण्डकः प्रसिद्धः। (१)

**स्वेच्छया रजौ क्रमेण सन्निवेशयत्युदारधीः कविः स दण्डकः स्मृतो जयत्यशोकमञ्जरी। (२) र ज र ज र ज र ज र ज र।**

स्वेच्छयेति। उदारा महती धीर्बुद्धिर्यस्य तादृशः कविः काव्यनिर्माता, यस्य प्रतिचरणं स्वेच्छया रश्च जश्च रजौ रगण-जगणौ क्रमेण आदावेकं जगणं तदनन्तरमपि एकं रगणम् एकं जगणञ्च इत्येवं रीत्या इत्यर्थः। सन्निवेशयतियुङ्क्ते, अशोकमञ्जरी तन्नामा स्मृतः कथितः तदण्डकः जयति सर्वोत्कर्षेण वर्त्तते। (२)

**नयुगलगुरुयुगेवं यकाराः कवीच्छानुरोधात् तदा यत्र वक्ष्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः 'सिंहविक्रान्त' नामा। (३)**

नयुगलेति। यत्र यदेत्यर्थः, छन्दसः प्रतिचरणं कवीच्छा-नुरोधात् काव्यनिर्म्मातुरभिलाषवशात् आदौ नयुगञ्च लश्च गुरुयुक् च येषां समाहारः नयुग-ल-गुरुयुक्, नगण-द्वयमेको लगणः, गुरुद्वयञ्चेत्यर्थः, एवं तदनन्तरञ्च यकाराः यगणाः, अर्थात् द्वादशेति शेषः, वक्ष्यन्ते कथयिष्यन्ते, तदा पण्डितैः विपश्चिद्भिः एष स सिंहविक्रान्तनामा सिंहविक्रान्तनामकः अपरः प्रागुक्तविलक्षण दण्डक ईरितः कथितः। (३)

---

# तृतीया प्रभा



**अथार्द्धसममुदाह्रियते—**

**विषमे यदि सौ सलगा दले भौ युजि भाद्**

**गुरुकावुपचित्रम् ॥१ (द्विः पाठात् पद्यपूर्त्तिः)**

अथार्धसममिति। विषमे प्रथमे पादे यदि सगणत्रयं लघुगुरुचैते भवन्ति, युजि द्वितीये पादे भगणत्रयं गुरुद्वयं च स्यादिति दले पूर्वार्द्धे लक्षणं। एतदेव परार्द्धे भवेदर्धसमवृत्तप्रस्तावात्। अतः उक्तं द्विः पाठात् पद्यपूर्त्तिरिति। एवं सर्वत्र ज्ञेयम्। तदोपचित्र छन्दः।

अर्थात् यदि चेत् छन्दसः विषमे दले अयुग्मे खण्डे, प्रथमे तृतीये च पादयोरित्यर्थः। आदौ सौ द्वौ सगणौ, ततश्च सलगाः सगण-लगण-गगणाः स्युरिति शेषः। तथा भुजि दले समे खण्डे, द्वितीये चतुर्थे च पादयोरित्यर्थः, आदौ भौ द्वौ भगणौ, ततश्च भाद् भगणात् परं गुरुकौ द्वौ गगणौ स्यातामिति शेषः, तदा उपचित्तं तन्नामकं वृत्तं भवति। एवञ्चात्र प्रथमे तृतीये च पादे क्रमशस्त्रयः सगणा तगण-गगणौ, द्वितीय चतुर्थे च पादे त्रयो भगणा द्वौ गगणौ स्यातामिति पर्य्यवसितम्। उदाहरणम्—

मुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम्।
गगनं चपलामिलितं यथा शारदनीरधरैरुपचित्रम्॥

हेमनिभं सुवर्णसदृशं पीतवर्णमित्यर्थः अंशोकं वसनं यत्र तत् हेमनिभांशुकम्, चन्देनेन लिप्तं चन्दनलिप्तम्, हेमनिभांशुकञ्च चन्दनलिप्तञ्च हेमनिभांशुकचन्दनलिप्तम्, तादृशं मुरवैरिवपुः मुरारि

कलेवरम्, कृष्णस्य तनुरित्यर्थः। चपलया विद्युता 'विद्युच्चञ्चला चपलाऽपि च' इत्यमरः। मिलितं संभिन्नम्, तथा शारदनीरधरैः शारदकालीनमेघैः उपचित्रं चित्रितं गगनं यथा आकाशमिव मुदमानन्दं जनानामिति शेषः, तनुतां विस्तारयतु, करोत्विति यावत् ॥१॥

**विषमे प्रथमाक्षरहीनं दोधकमेव हि 'वेगवती' स्यात् ॥२**

**स स स ग भ भ भ ग ग।**

विषमेति। विषमे प्रथमे तृतीये च पादे लघुद्वयं गगणद्वयं, गुरुद्वयं च भवति, द्वितीये चतुर्थे च गगणत्रयं गुरुद्वयं च स्यात्तदा वेगवती छन्दः स्यात्। अर्थात् 'दोधकमिच्छति भ त्रितयाद्गौ' इत्युक्तलक्षणं दोधकवृत्तमेव विषमे अयुग्मे, प्रथमे तृतीये च पादयोरित्यर्थः। प्रथमाक्षरेण प्राणमिकवर्णेन हीनं रहितं तत् 'वेगवती' तन्नामकं वृत्तं स्यात्। एतेनात्र प्रथमे तृतीये च पादे त्रयः सगणा गुरुश्चैकः द्वितीये चतुर्थे च त्रयो भगणा द्वौ च गगणाविति फलितम्। हीत्यवधारणे। पादद्वयमेतत्। एवमुत्तरत्र। उदाहरणम्—

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा।
रभसान्न गुरुन् गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥

स्मरेति। स्मरवेगवती कामवेगशालिनी मदनोन्मत्तेत्यर्थः, व्रजरामा काचिद् व्रजरमणी केशवस्य कृष्णस्य वंशरवैः वंशीध्वनिभिः अतिमुग्धा अत्यन्तं मोहं गता, हृतमानसेत्यर्थः, अतएव रभसात् हर्षात् गुरून् गुरुजनान् न गणयन्ती, तेभ्यः अलज्जितेति भावः। केलिनिकुञ्जगृहाय क्रीड़ाकुञ्जस्थ मण्डपाय जगाम

वेगवती ॥२॥

**अयुजि प्रथमेन विवर्जितं द्रुतविलम्बितकं हरिणप्लुता ॥३**

**स स स ल ग न भ भ र ।**

अयुजीति । अयुजि प्रथमे तृतीये च लघुद्वयं रगणश्च स्यात् । द्वितीये चतुर्थे च नगणो भगणद्वयं रगणश्च स्यात्तर्हि हरिणप्लुता । अर्थात् द्रुतविलम्बितमाह 'नभौ भरौ' इति यद् द्रुतविलम्बितं नाम छन्द उक्तम्, तद् द्रुतविलम्बितमेव द्रुतविलम्बितकम्, स्वार्थे कः, अयुजि अयुग्मे, प्रथमे तृतीये च पादयोरित्यर्थ । प्रथमेन प्रथमाक्षरेण विवर्जितं रहितं तत् हरिणप्लुता तदाख्यकं वृत्तं भवति । एवञ्चात्र प्रथमे तृतीये च पादे त्रयः सगणा लगणगगणौ च, द्वितीये चतुर्थे च नभौ भरौ च गणाविति पर्य्यवसितम् ।

उदाहरणम्—

स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता ।
कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥

स्फुटेति । स्फुटो विशदः फेनचयः फेनसमूहो यस्या स्तथाभूता, तथा हरिणानां मृगाणां प्लुतं लम्फनेन गमनं यस्यां तादृशी, किञ्च, बलिभः पूजोपकरणद्रव्यैः मनोज्ञं मनोहरं तटं यस्यास्तथोक्ता, तथा कलहंसानां कादम्बानां 'कादम्बः कलहंसः' स्यादित्यमरः, यत् कुलं समूहः, तस्य आरवेण कलकलध्वनिना शालितुं शोभितुं शीलं यस्याः सा तथाभूता तरणेः सूर्य्यस्य सुता कन्या यमुनेत्यर्थः, विहरतः तीरदेशे क्रीड़ां कुर्वतः हरेः कृष्णस्य मनश्चित्तं हरति स्म जहार ॥३॥

**विषमे ससजा गगौ समे चेत् सभराद् यः किल**

**मालभारणीयम् ॥४**

विषमे ससेति । प्रथम-तृतीययोः सगणद्वयं जगणो गुरुद्वयञ्च

स्यात्। द्वितीय-चतुर्थयोस्तु सगण-भगणौ रगण-यगणो च स्यातां तर्हि मालभारिणी छन्दः। (कालभारिणीति वृत्तरत्नाकर-परिशिष्टे) अर्थात् विषमे ससजा यदा गुरू चेत् सभरा येन तु 'मालभारिणी'यम्। स स ज ग ग स भ र य।

विषमे इति। यदा यदि विषमे ससजाः सगण-सगण-जगणाः, गुरू द्वौ गगणौ च स्याताम्, चेत् तु यदि च समे इति शेषः, येन परवर्त्तिना एकेन यगणेन सहेत्याशयः, सभराः सगण-भगण-रगणाः स्युः, तदा इयं निरूप्यमाणा मालभारिणी तदाख्यकं वृत्तं भवति ॥४॥

**भत्रयमोजगतं गुरुकौ चेद् युजि च न जौ ज्ययुतौ द्रुतमध्या ॥५**

भत्रयमिति। भगणत्रयं गुरुयुगलञ्च यद्योजगतं प्रथम-तृतीय-पादगतं स्यात्, युजि द्वितीये चतुर्थे च पादे नगणो जगणद्वयं यगणश्च भवेत्, तदा द्रुतमध्या छन्दः। अर्थात् चेद् यदि छन्दस ओजं विषमं प्रथम-तृतीयौ पादावित्यर्थः, गतं प्राप्तं भत्रयं भगणत्रयं तथा गुरुणी द्वौ गगणौ च ओजगते स्यातामिति शेषः। किञ्च, युजि समे, द्वितीय-चतुर्थयोः पादयोरित्यर्थः। ज्ययुतौ अन्ते जगण-यगणाभ्यां युक्तौ नजौ नगण-जगणौ स्यातामिति शेषः। तदा द्रुतमध्या तदाख्यकं वृत्तं भवति। उदाहरणम्—

यद्यपि शीघ्रगतिर्मृदुगामी बहुधनवानपि दुःखमुपैति।
नातिशयत्वरिता न च मृद्वी नृपतिगतिः कथिता द्रुतमध्या ॥
(पिङ्ग० ५ सू० ३३ अ०) ॥५॥

**ओजे तपरौ जरौ गुरुश्चेन्म्सौ जगौ ग् भद्रविराड् भवेदनोजे ॥६**

ओजे इति। ओजे प्रथमे तृतीये च पादे तगण-जगण-रगण-

गुरवः स्युः। अनोजे द्वितीये चतुर्थे च मगण-सगणा जगणो गुरू च स्यातां तदा भवति भद्रविराड् छन्दः।

अर्थात् चेद् यदि छन्दस ओजे अयुग्मे प्रथम-तृतीययोः पादयोरित्यर्थः, त-परौ आदौ वर्त्तमानादेकस्मात् तगणात् परवर्त्तिनौ जरौ जगण-रगणौ, ततश्च गुरुरेको गगणश्च स्यात्, तथा अनोजे युग्मे द्वितीय-चतुर्थयोः पादयोरित्यर्थः। म्च सश्च म्सौ मगण-सगणौ, ज्च गश्च ज्गौ जगण-गगणौ, ग् पुनरप्येको गगणश्च स्यात्, तदा भद्रविराड् तन्नामकं वृत्तं भवेत्। 'अस्यौपच्छन्दसकान्तः पतित्वेऽपि विशेषसंज्ञार्थमर्धसमाधिकारे पाठ इति हलायुधोक्तविशेषोऽत्र ज्ञेयः। उदाहरणम्—

यत्पादतले चकास्ति चक्रं हस्ते वा कुलिशं सरोरुहं वा।
राजा जगदेकचक्रवर्त्ती स्याच्छं भद्रविराड् समश्नुतेऽसौ ॥

(पिङ्ग० ५ अ० ३५ सू०) ॥६॥

**विषमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद्गुः ॥७**

विषमे सजाविति। प्रथम-तृतीययोः सगण-जगणौ सगणौ सगुरुयुक्तौ सगण गुरू च स्यातां, द्वितीय-चतुर्थयोस्तु भगण-रगण-नगण-गुरुयुग्मं स स्युः, तदा 'केतुमती' छन्दः। अर्थात् यस्य असमे अयुग्मे प्रथम-तृतीययोः पादयोरित्यर्थः। सगुरुयुक्तौ सश्च गुरुश्च सगुरू ताभ्यां युक्तौ अन्वितौ, परवर्त्तिभ्यां सगण-गगणाभ्यां युतावित्यर्थः, सजौ सगण-जगणौ स्यातामिति शेषः। तथा समे युग्मे द्वितीय-तृतीययोः पादयोरित्यर्थः, भश्च रश्च नश्च गश्च तेषां समाहारः भरनगम्, तस्माद् भगण-रगण-नगण-गगणेभ्यः परमित्यर्थः, स एको गगणः स्यात्, तत् केतुमती तदाख्यकं वृत्तं भवति। उदाहरणम्—

हृतभूरिभूमिपतिचिह्नां युद्धसहस्रलब्धजयलक्ष्मीम् ।
सहते न कोऽपि वसुधायां केतुमतीं नरेन्द्र तव सेनाम् ॥
(पिङ्ग० ५ अ० ३६ सू०) ॥७॥

**'आख्यानकी' तौ जगुरू ग ओजे जतावनो जे जगुरूगुरुश्चेत् ॥८॥ त त ज ग ग ज त ज ग ग ।**

आख्यानकीति । प्रथम-तृतीययोस्तगणयद्वयं जगणो गुरुद्वयश्च स्यात्, द्वितीय-चतुर्थयोस्तु जगणस्तगणो जगणोगुरुद्वयश्च भवति, तदा आख्यानकी छन्दः । अर्थात् चेद् यदि ओजे आदौ तौ द्वौ तगणौ, ततश्च जश्च गुरुश्च जगुरू जगण-गगणौ, ग एको गगणश्च स्यात्, तथा अनौजे युग्मे जतौ जगण-तगणौ, जगुरू नगण-गगणौ, गुरु एको गगणश्च स्यात्, तदा आख्यानकी तन्नामकं वृत्तं भवति । उदाहरणम्—

भृङ्गावलीमङ्गलगीतनादैर्जनस्य चित्ते मुदमादधाति ।
आख्यानकी च स्मरजन्मपाश महोत्सवस्याश्रवणे क्वणन्ती ॥
(पिङ्ग० ५ अ० ३७ सू०) ॥८॥

**जतौ जगौ गौ विषमे समे स्यत्तौ ज्गौ ग एषा विपरीतपूर्वा ॥९॥ ज त ज ग ग त त ज ग ग ।**

जताविति । प्रथम-तृतीययो जगण-तगणौ जगण-गुरू चैते भवन्ति । द्वितीय-चतुर्थयोस्तु तगणद्वयं जगणो गुरुयुग्मश्च स्यात्तदा विपरीतपूर्वा छन्दः । अर्थात् चेद् यदि छन्दसः विषमे क्रमशः जतौ जगण-तगणौ, जगौ जगण-गगणौ, ग एको गगणश्च स्यात्, तथा समे तौ द्वौ तगणौ, ज्गौ जगण-गगणौ, ग एको गगणश्च स्यात्, तदा एषा आख्यानकी विपरीतपूर्वा विपरीतशब्दः पूर्वं यस्यास्तदृशो विपरीताख्यानकीत्ति यावत्, नाम वृत्तं भवति ।

पिङ्गलमते—विपरीताख्यानकीत्येव नाम। अपरे पुनरस्या विपरीतपूर्वेव नाम नतु आख्यानकीत्यपि मन्यन्ते। निरुक्ताख्यानकीद्वयस्य पूर्वाया अयुक्पादद्वये इन्द्रवज्रायाः युक्पादद्वये च उपेन्द्रवज्राया लक्षणघटितत्वात्, अपरायाश्च अयुक्पादद्वये उपेन्द्रवज्रायाः, युक्पादद्वये चेन्द्रवज्राया लक्षणघटितत्वात् उपजात्यन्तर्गतत्वम्। सति चैवमुपजातावनन्तर्भाव्य पृथक्तया निर्देशस्तु संज्ञान्तरज्ञापनार्थं एव। तथा च आह हलायुधः—'एतयोश्च वक्ष्यमाणोपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थमर्धसमाधिकारे पाठः' इति। अस्या उदाहरणम्—

अलं तदालीकवचोभिरेभिः स्वार्थं प्रिये साधय कार्य्यमन्यत्।
कथं कथावर्णनकौतुकं स्याद् आख्यानकी चेद् विपरीतवृत्तिः॥
(पिङ्ग० ५ अ० ३८ सू०) ॥९॥

**अयुजि ननरला गुरुः समे यदपरवक्त्रमिदं नजौ जरौ ॥१०**

अयुजीति। प्रथमे तृतीये च नगणद्वयं रगणो लघुर्गुरुश्च भवति। द्वितीये चतुर्थे च नगणो जगणद्वयं रगणश्च स्यात्तर्हि अपरवक्त्र छन्दः। अर्थात् न न र ल ग, न ज ज र। यस्य अयुजि अयुग्मे, प्रथमे तृतीये च पादयोरित्यर्थः। नश्च नश्च रश्च लश्च ननरलाः नगण-नगण-रगण-लगणाः, गुरुरेको गगणश्च स्यात्, तथा समे युग्मे, तृतीये चतुर्थे च पादयोरित्यर्थः। नश्च जश्च नजौ नगण-जगणौ, जश्च रश्च जरौ जगण-रगणौ च स्यातामित्यर्थः, तद् इदम् अपरवक्त्रं तदाख्यकं वृत्तं भवति। उदाहरणम्—

स्फुटसुमधुरवेणुगीतिभिस्तमवक्त्रमवेत्य माधवम्।
मृगयुवतिजनैः समं स्थिता व्रजवनिताधृतचित्तविभ्रमाः॥

स्फुटेति। व्रजवनिताः व्रजाङ्गनाः, तं माधवं कृष्णं स्फुटाः

व्यक्ताः सुमधुराः सुमिष्टाश्च या वेणुगीतयः वंशीसङ्गीतानि ताभिः करणैः, न विद्यते परो यस्मात् तत् अपरम् अलोकसाधारणमित्यर्थः, तादृशं वक्त्रम् आननं यस्य तथाभूतं वंशीवादने सुनिपुनमित्याशयः, अवेत्य ज्ञात्वा, मृगयुवतिगणैः हरिणीसमूहैः समं सह धृतः गृहीतः चित्तविभ्रमः मनोमुग्धता याभिस्तथाभूताः विमोहितमानसा इत्यर्थः। सत्यः स्थिता अतिष्ठन्। कृष्णस्य वंशीसङ्गीताकर्णनेन व्रजाङ्गना मृगीगणाश्च सममेव विमोहिता आसन्निति भावः ॥१०॥

**अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥११॥ न न र य न ज ज र ग।**

अयुजि नेति। प्रथमे-तृतीये च द्वौ नगणौ रगण-यगणौ भवतां, द्वितीये चतुर्थे च नगणो जगणद्वयं रगणश्च गुरुश्च तदा पुष्पिताग्रा छन्दः। अर्थात् वैतालीयं पुष्पिताग्राञ्चेन्त्यपरवक्त्रकम्। वैतालीयं पुष्पिताग्राञ्च वृत्तद्वयम् अपरवक्त्रम् इच्छन्ति अपरवक्त्रमिति नाम्ना व्यवहरन्ति विद्वांस इति शेषः। इत्येवमत्र ग्रन्थार्थः। एवञ्चैतन्मते वैतालीयपुष्पिताग्रावृत्तयोरपरवक्त्रान्तर्गतत्वमिति फलितम्। वस्तुतस्तु पूर्वाचार्य्यैरसम्मतत्वादयं पाठपरिपुष्टमिदं मतमिति कैश्चिन्मन्यन्ते। तथा च भट्टकेदारेणाभिहितम्

—वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः।
पुष्पिताग्राभिधं केचिद् औपच्छन्दसकं तथा॥

(वृत्त र० ४ अ० ११)

नारायणभट्टेनास्य व्याख्यायामपि—"विपश्चितः पण्डिताः अपरवक्त्राख्यं वैतालीयमेवेदं वदन्ति। पुष्पिताग्राभिधं छन्दसकमेव केचिदाहुः।" इत्युक्तम्। सति चैवमपरवक्त्रस्य वैतालीयान्तर्गतत्वं पुष्पिताग्रायाश्च औपच्छन्दसकान्तर्गतत्वमित्यनुसन्धेयम्, अपरवक्त्रस्यात्र पृथक्तया निर्देशस्तु संज्ञाविशेषख्यापनार्थमिति ज्ञेयम्।

उदाहरणम्—

करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः।
स्मितरुचिरविलासपुष्पिताग्रा व्रजयुवति व्रततिर्हरेर्मुदेऽभूत् ॥११॥

**स स ज ग स भ र ल ग**

**अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी मता ॥१२**

अयुजोरिति। यदि प्रथम-तृतीययोः सगणद्वयं जगणो गुरुश्च स्यात्, द्वितीय-चतुर्थयोस्तु सगण-भगण-रगणा गुरुर्लघुर्गुरुश्च भवेयुस्तदा सुन्दरी छन्दः। अर्थात् यदि चेत् छन्दसः अयुग्मयोः प्रथम-तृतीययोः पादयोरित्यर्थः। सौ द्वौ सगणौ, जश्च गश्च जगौ जगण-गगणौ च, स्यातामित्यर्थः, तथा यदि च युजोः युग्मयोः, द्वितीय-चतुर्थयोः पादयोरित्यर्थः, सश्च भश्च रश्च सभराः, सगण-भगण-रगणाः, ल्च गश्च ल्गौ लगण-गगणौ च स्यातामित्यर्थः। तदा सुन्दरी तदाख्यकं वृत्तं भवति। ग्रन्थान्तरे चेदमेव वृत्तं 'वियोगिनी'ति नाम्ना व्यपदिश्यते। तल्लक्षणन्तु— 'विषमे ससजा गुरुः समे सभरा लोऽथ गुरु'वियोगिनी' इति। रघुवंशेऽज-विलापे कुमारसम्भवे रतिविलापे चेदमेव नाम समुपलभ्यते।

'तव तन्वि कटाक्ष वीक्षितः प्रहरद्भिः श्रवणान्तगोचरैः।
विशिखैरिव तीक्ष्णकोटिभिः प्रहतः प्राणिति दुष्करं गतः॥' इति।

पिङ्गलोक्ते वैतालीयस्य द्वितीयोदाहरणे सुन्दरी-लक्षणप्रवेश-दर्शनात्। पिङ्गलेन च 'सुन्दरी' 'वियोगिनी'ति वा नाम्ना कस्यापि छन्दसोऽनुक्तत्वाद् वैतालीय भेद एवास्या अन्तर्भाव इत्यपि केचिन्मन्यन्त इति ज्ञेयम्। उदाहरणम्—

(१) यदवोचदुदीक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा।
अपि कंसहरस्य दुर्वचं वचनं तद्विदधीत विस्मयम्॥

(२) यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्॥

इति भारवौ (२।२ श्लोक)

(१) सुन्दरी सुरूपा राधा इति शेषः, परितः सर्वतः स्नेहमयेन प्रेमप्रचुरेण चक्षुषा नयनेन उदीक्ष्य आलोक्य यद् वचनं वाक्यम् अवोचत् उक्तवती, दुर्वचम् अन्यथा वक्तुमशक्यं तद् वचनं कंसहरस्य कृष्णस्यापि विस्मयम्—आश्चर्य्यं विदधीत कुर्य्यात्।

(२) यदिति। मानिनी क्षत्रियकुलत्वाभिमानिनी द्रौपदी, स्नेहमयेन स्नेहप्रचुरेण चक्षुषा ज्ञानदृष्ट्या इत्यर्थः, परितः समन्तात् वीक्ष्य दृष्ट्वा विचार्य्येति यावत्, यद् वचनं अवोचत उक्तवती, दुर्वचम् अन्यथा वक्तुमशक्यम् तद् वचनं वाक्यं वागधिपस्य बृहस्पतेरतिविस्मयम् आश्चर्य्यभावं विदधीत जनयेत्॥१२॥

**स्यादयुग्मके रजौ रजौ समे तु जरौ जरौ गुरुर्जव**
**परामतीयम्॥१३**

त्रयोदशार्द्धसमानि।

इति छन्दः कौस्तुभे वर्णच्छन्दसि अर्द्धसमवृत्ताख्या तृतीया प्रभा॥३॥

स्यादिति। अयुग्मके प्रथमे तृतीये च पादे रगण-जगणौ द्विः पठितौ स्यातां समे द्वितीये चतुर्थे च जगण-रगणौ द्विरुक्तौ गुरुश्चैकस्तदा जवपरामती छन्दः। वृत्तरत्नाकरटीकायां खलु यवमतीति नाम।

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये**
**अर्द्धसमवृत्ताख्यानं तृतीया प्रभा॥२॥**

अर्थात् यदा छन्दसः अयुग्मके विषमे रजौ रगण-जगणौ, भूयोऽपि रजौ रगण-जगणौ च स्याताम्, तथा समे तु जरौ जगण-रगणौ, जरौ पुनरपि जगण-रगणौ, गुरुरेको गगणश्च स्यादित्यर्थः, तदा इयं यवात् य-व-शब्दात् मती यवमती तदाख्यमिति यावत्, वृत्तं भवति। उदाहरणम्—

पद्मकन्तु कोमलं करे विभाति प्रशंस्य मत्स्यलाञ्छनं पदे च यस्याः।
सा यवान्विता भवेद्धनाधिका च समस्तबन्धुपूजिता प्रिया च पत्युः॥
(पिङ्ग० ५ अ० ४२ सू० उ०)

**छन्दो मञ्जर्यामत्र विशेषः—**

**(१) न न भ भ न न र र**

**अयुजि ननभभाः समकेऽपि तु नयुग-रयुगलं तदा कौमुदी।**

अयुजीति। यदि छन्दसः अयुजि अयुग्मे ननभभाः नगण-नगण-भगण-भगणाः स्युः, समके युग्मे तु नयुगश्च रयुगलश्च तयोः समाहारः नयुग-रयुगलं द्वौ नगणौ द्वौ च रगणावित्यर्थः, स्यात् तदा कौमुदी तदाख्यकं वृत्तं भवति। (१)

**(२) न ज ज र स ज य र ल ग**

**यदि विषमे भवतो नजौ जरौ सजयाः समे तु रलौ गो मञ्जुसौरभम्।**

यदीति। यदि चेत् छन्दसो विषमे नजौ नगण-जगणौ, जरौ जगण-रगणौ च भवतः, समे तु सजयाः सगण-जगण-यगणाः, रलौ रगण-लगणौ ग एको गगणश्च भवेयु तदा मञ्जुसौरभम् तन्नामकं वृत्तं भवेत्। (२)

---

# चतुर्थी प्रभा



अथ विषममुदाह्रियते—

स ज स ल न स ज ग

प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यतः परम् ।

भ भ भ ग स ज स ज ग

यद्यथ भनभगाः स्युरथो सजसाः जगौ च भवतीय मुद्गता ।।

'यद्यथ भनसलगाः स्युरथो'–इति तृतीयः क्वचित् ।।१

अथ क्रमप्राप्तानि विषम-वृत्तानि वक्तुमारभते—अथ विषममिति। विषमवृत्तानि खलु त्रिविधानि भवन्ति। उद्गता-पदचतुरूर्द्ध्वोपस्थितप्रचुपित भेदात् । तेषूद्गताभेदानाह—प्रथमे सेति। यस्य प्रथमे पादे सगण-जगणौ सगण-लघू च स्यातां, अतः प्रथमात् परं द्वितीये पादे नगण-सगणौ जगण-गुरू च स्यातां, अथ द्वितीयानन्तरं तृतीये पादे यदि भगण-नगणौ भगण-गुरू च स्यातां। अथ तृतीयानन्तरं चतुर्थे पादे सगण-जगणौ द्विः पठितौ गुरुश्चैकः, तदुद्गता छन्दः। अर्थात् यदि चेद् छन्दसः प्रथमे आद्ये पादे सजौ सगण-जगणौ, सलौ सगण-लगणौ च स्यातामिति शेषः। अनन्तरं द्वितीये पादे इत्यर्थः, नसजगुरुकाणि नगण-सगण-जगण-गगणाः स्युः, अथ तदनन्तरं तृतीये पादे इत्यर्थः। भनभगाः, भगण-नगण-भगण-गगणाः स्युः, अथो तदनन्तरञ्च चतुर्थे पादे इत्यर्थः। यदि च सजसाः सगण-जगण-सगणाः, जगौ जगण-गगणौ च स्यातामिति शेषः। तदा इयं निरूप्यमाणा उद्गता तन्नामकं वृत्तं भवति। उदाहरणम्—

विललास गोपरमणीषु तरणितनया प्रमोद्गता ।
कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्मिविभ्रमम् ॥

विललासेति। प्रभया दीप्त्या अथाच्चन्द्रस्येति शेषः। उद्गता वृद्धि गता तरणितनया सूर्य्यतनया यमुनेत्यर्थः। यद्वा, तरणितनया प्रभेत्येकं पदम् उद्गतेति पृथक्। गोपरमणीषु गोपाङ्गनासु स्थितास्वपि इति शेषः। ता अनादृत्य इत्याशयः, कृष्णस्य नयने नेत्रे एव चकोरयुगं तन्नाम्ना प्रसिद्धं पक्षियुगलम्, तस्मिन् सुधांशोः चन्द्रस्य या किरणोर्मिः अंशुपरम्परा, तस्या विभ्रमं भ्रान्ति दधती जनयन्ती विललास शुशुभे। सत्यपि गोपाङ्गनागणे यमुनामेव कृष्णः साग्रहमवलोकितवानिति भावः ॥१॥

**स ज स ल स न ज ग**

**प्रथमे सजौ यदि सलौ च, नसगुरुकाण्यनन्तरम् ।**

**भ न ज ल ग स ज स ज ग**

**यद्यथ भनजलगाः स्युरथो, सजसा जगौ च भवतीय'मुद्गता' ।**

अन्यविधामुद्गतां दर्शयति—प्रथमे इति। अस्याः प्रथम-द्वितीय-चतुर्थपादेषु पूर्ववत् गणाः। तृतीयपादे तु यथाक्रमं भनजलगा गणा भवेयुरिति प्रागुक्तया अस्या विशेषः। उदाहरणम्—

अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् ।
क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः ॥

इति भारवौ (१२।१ श्लोक) उद्गता भेदः।

अथेति। अथ अनन्तरं वासवस्य इन्द्रस्य वचनेन उपदेश-वाक्येन रुचिरं प्रसन्नं वदनं मुखं यस्य स तथोक्तः, प्रसन्नमुख इत्यर्थः। धनञ्जयः अर्जुनः त्रिलोचनं शिवम् अभिराधयितुं

सन्तोषयितुं विधिवत् यथाशास्त्रं क्लान्तिः परिश्रम, तथा रहितं यथा स्यात्तथा श्रममविगणय्येत्यर्थः, तपांसि तपस्या विदधे अनुष्ठितवान् ॥१॥

**त्रयमुद्गता-सदृशमेव पदमिह तृतीयमन्यथा ।**

**जायते रनभगैर्ग्रथित कथयन्ति सौरभकमेतदीदृशम् ॥२**

त्रयमिति। यत्र त्रयं प्रथमद्वितीयचतुर्थात्मकं पादत्रयमुद्गतावदेव स्यात्, तृतीयं पादं रणभगैः ग्रथितं सदन्यथा जायते, तृतीये पादे रगण-भगणौ भगण-गुरू च स्यातामित्यर्थः, तत् सौरभकच्छन्दः।

अर्थात् इह अस्मिन् छन्दो ग्रन्थे यस्य त्रयं पादत्रयं प्रथम-द्वितीय-तृतीयाः पादा इत्यर्थः। उद्गतया 'प्रथमे सजौ यदि सलौ च, नसजगुरकाण्यनन्तरम्। यद्यथ भनभगाः स्युरथो, सजसा जगौ च भवतीयमुद्गता' इत्युक्तलक्षणेन प्रथमोद्गतावृत्तेन सदृशं तुल्यं भवति। किन्तु तृतीयं पदमेव केवलस्तृतीयपाद एवेत्यर्थः। रनभगैः रगण-नगण-भगण-गगणैः ग्रथितं घटितं सत् अन्यथा अन्यप्रकारकम्, उक्त विलक्षणमित्यर्थः, जायते भवति, ईदृशम् उक्तप्रकारम्, एतत् तत् सौरभकं नाम वृत्तं कथयन्ति वदन्ति विद्वांस इति शेषः। उदाहरणम्—

परिभूतफुल्लगतपत्र-वनविसृतगन्धविभ्रमा।

कस्य हृन्न हरतीह हरेमुखपद्मसौरभकलातवाद्भुता ॥

परीति। हे हरे कृष्ण! परिभूतः अभिभूतः तिरस्कृत इति यावत्। फुल्लशतपत्त्रवनानां विकसितपद्मवनसमूहानां विसृतगन्धविभ्रमः विस्तृतसौरभविलासः यया सा तथोक्ता अद्भुता आश्चर्य्यरूपा इव मुखपद्मसौरभकला मुखपद्मस्य वदनकमलस्य

सौरभकला सौगन्धलेशः इह अस्मिन् जगति कस्य जनस्य हृत् मानसं न हरति न मोहयति ? अपितु सर्वस्यैवेति भावः ॥२॥

**न-युगं सकारयुगलञ्च भवति चरणं तृतीयकं ।**

**तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्‌गता ॥ ३**

**इत्युद्‌गता-भेदाः ॥**

नयुगलमिति। यत्र तृतीये पादे नगणद्वयं सगणद्वयं च स्यादवशिष्टं पादत्रयं उद्‌गतावद्भवेत्तदुरुमतिभिर्बुधैर्ललित-छन्दः प्रोक्तमित्यर्थः।

इत्युद्‌गता-प्रकरणं समाप्तम् ॥

अर्थात् अस्य निरूप्यमाणवृत्तस्य तृतीयके तृतीये चरणे पादे यदि चेत् क्रमशः नयुगं द्वौ नगणौ सकारयुगलं द्वौ सगणौ च भवतः, शेषम् अवशिष्टं च सकलं सर्वं प्रथम-द्वितीय-चतुर्थरूपपाद-त्रयमित्यर्थः। यथोद्‌गता उद्‌गता इव भवति, तदा तत् एतत् उदारमतिभिः प्रशस्तबुद्धिभिः पण्डितैरिति शेषः। ललितं तन्नामकं वृत्तं उदितं कथितम्। उदाहरणम्—

व्रजसुन्दरीसमुदयेन मुदितमनसा स्म पीयते।
हिमकरगलितमिवामृतकं ललितं मुरारिमुखविद्रुतम् ॥

व्रजेति। व्रजसुन्दरीणां व्रजाङ्गनानां यः समुदयः समूहः तेन व्रजाङ्गनागणेनेत्यर्थः, मुदितं प्रीतं मनो मानसं यस्य तेन तादृशेन सता हिमकरात् सुधांशोः गलितमिव मुरारेः कृष्णस्य मुखचन्द्राद् वदनसुधांशोः विद्रुतं क्षरितं ललितं मनोहरम्। अमृतकम् अमृतं सुधेत्यर्थः, पीयते स्म पीतम् ॥३॥

**आद्यः पादोऽष्टाभिर्वर्णैस्ततोऽन्ये चतुरक्षरैः क्रमाद्वृद्धाः।**
**पादा यस्य द्वितीयाद्याः षट्पञ्चाशद्वर्णा यत्र।**
**तदिह विबुधजनैरुक्तं पदचतुरुद्र्ध्वं नाम वृत्तम्॥ (१)**

अथ पादचतुरूद्ध्र्वं छन्दो दर्शयति—आद्य इति। यस्याद्यः पादो वर्णैरष्टभिः भवति, तत् आद्यादन्ये द्वितीयादयस्त्रयः पादाश्चतुर्भिर्वर्णैः क्रमाद् वृद्धा भवन्ति, तत् षट्पञ्चाशद्वर्णात्मकं पदचतुरूद्ध्र्वमिति छन्दः स्यादित्यर्थः। एतदुक्तं यस्य भवति, प्रथमः आदोऽष्टवर्णः द्वितीयो द्वादशवर्णः तृतीयः षोड़षवर्णश्चतुर्थो विंशतिवर्णस्तत् पदचतुरूद्ध्र्वमिति। पादादि पादाः क्रमेण व्युत्क्रमेण वा चतुरूद्ध्र्वानि चतुर्वर्णवृद्धानि यस्य यदिति विग्रहः। अत्र वर्णा गुरुलघुरूपास्तिलतण्डुलवद् विमिश्रिता बोध्याः। (१)

**आपीड़ इदमेवान्त्यौ वर्णौ चेद् गावथादिना।**
**क्रमात् पादेन पादा द्वितीयाद्यास्त्रयस्तदा**
**कलिकालवली प्रोक्ताऽमृतधारा च सूरिभिः। (२-५)**

**(लक्ष्य चतुष्टयमूह्यं) इति पदचतुरूद्ध्र्वभेदाः॥**

अथ तद्भेदानालक्ष्य निरपेक्षाणि लक्षणान्याहापीड़ इति। इदमेव पदचतुरूद्ध्र्वमापीड़ः स्यात् चेत् यद्यन्तौ गौ गुरू स्यातामिति। अयमर्थः—पूर्वोक्ते पदचतुरूद्ध्र्वे छन्दसि चेत् प्रतिपादस्यान्त्यवर्णद्वयं गुरुः स्यादन्ये सर्वे वर्णा लघवः स्युस्तर्हि तदेवापीड़च्छन्दः। यथा—

विहरति हरिरुच्चैः व्रजविपिनमनुरसिकराजः।
य उदित वरसुरभिमभिकलितमाङ्ग
विरचयति बहुविधकुसुमचयमयमिह पीड़म्। (२)

अथ चेदष्टवर्णवपुरापीड़स्य प्रथमश्चरणो द्वितीय-तृतीय-चतुर्थेषु चरणेषु क्रमेण स्यात्तर्हि कलिका-लवल्यामृतधाराख्यानि क्रमात् त्रीणि छन्दांसि भवन्तीत्यर्थः। अयमत्र निष्कर्षः—यद्यापीड़स्य प्रथम-द्वितीय-गतीचरणौ मिथो विपर्य्यस्तौ स्यातां तृतीय-चतुर्थौ तु यथावस्थितौ, तर्हि कलिका छन्दः। इयं मञ्जरीत्यपरे। यथा—

व्रजविपिनमधिवसति सुभ्रु
रचित-कुसुमवेशा।
मुरहर ! सुललित-मुखरुचिरतिकान्ति
स्त्वयि परिहितमतिरुपधृतकमलकलिकासौ। (३)

अथ यद्यापीड़स्य प्रथमश्चरणस्तृतीयस्थाने भवति, अन्यत् सर्वं यथावस्थितं तर्हि लवली छन्दः। अयमत्र क्रमः—प्रथम-द्वादशवर्णः, द्वितीय-षोड़शवर्णः तृतीयोऽष्टवर्णः चतुर्थस्तु विंशतिवर्ण इति। यथा—

हरिचरणकमलमधुमत्ता
तदमलमधुरगुणगणगुणनशीला।
विरहविधुरचेता
निवसति भुवनमधिरुचि सुतुलि तव लवली सा। (४)

अथ यद्यापीड़स्य प्रथमश्चरणश्चतुर्थस्थाने भवति, अन्यत् सर्वं पूर्ववत्, तर्ह्यमृतधारा छन्दः। अयमत्र क्रमः—प्रथम-द्वादशवर्णः, द्वितीय-षोड़शवर्णः, तृतीयो विंशतिवर्णश्चतुर्थस्त्वष्टवर्ण इति।

यथा— सुललिततनुरुचिरतिशीता
मदनमदमुदितहृदयनयनपद्मा।
प्रियसखि ! मम मनसि निवसति वरवदनचन्द्रा
सततममृतधारा। (५)

**त्रितयं सनजरगा स्तथा ननौ सः ।**

**अथ ननन-युत जयम् ।**

**प्रचुपितमिदमुपस्थित-पूर्वम् । (१)**

अथोपस्थित-प्रचुपितच्छन्दो दर्शयति—म्सौ जभाविति। यस्मिन् छन्दसि म्सौ न्भौ गुरू चेति प्रथमाङ्घ्रिरोच्यते, त्रितयं द्वितीयाद्यङ्घ्रित्रयं सनजरगा इति ननौ स इति ननन-युत जयं चेति क्रमात् स्यात् तदुपस्थित-प्रचुपितच्छन्दः। यत्र मगण-सगणौ जगण-भगणो गुरू चेति प्रथमपादः। सगण-नगण-जगण-रगण-गुरव इति द्वितीयः। नगणद्वयं सगणश्चेति तृतीयः, नगणत्रयं जगण-यगणौ चेति चतुर्थः। (१)

**वर्द्धमानं तृतीयश्चेन्ननसैर्न नसैरिह । (२)**

अथ तद्भेदावाह—वर्द्धमानमिति। इह पूर्वच्छन्दसि तृतीय-पादश्चेद्द्विः पठितैर्ननसगणैः कल्प्येत, तर्हि तदेव वर्द्धमानच्छन्दः।

यथा— गोविन्दे यदि ते मन स्तदाऽतिपवित्रं
प्रथितं सपदि यशोऽत्र वर्द्धमानम्।
यमिह निगमचयतो निखिलविबुध-निवहाः
परमपुरुषमनु निगदन्ति भजन्ते। (२)

**तजरैस्तु शुद्धविराडार्षभं प्रथमे यतिः । (३)**

**(लक्ष्ययुग्ममूह्यं) इत्युपस्थितप्रचुपित-भेदाः ॥**

यदि तत्रैव पूर्वच्छन्दसि तगण-जगण-रगणैस्तृतीयः कल्प्येत तदा तदेव शुद्धविराडार्षभच्छन्दः। उभयत्र प्रथमे पादे यतिर्विरामः स्यात्। यथा—

विश्वस्मिन् वसतीह यः प्रभुर्महनीयो
यमिम वहुमतमार्षभं वदन्ति।

तं शुद्ध-विराट् परं प्रियं
विमलमतिभिरनुगतमाशु भजध्वम् । (३)

अथोरुदाहरणं ग्रन्थ-गौरवभयान्नकृतमित्याह—लक्ष्येति ।

इत्युपस्थित-प्रचुपित-प्रकरण-व्याख्यानम् ।।

---

**विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।**
**यच्छन्दो नोक्तमत्र गाथेति तत् सूरिभिः प्रोक्तम् ।। (१)**

**द्वादश विषमाणि ।।**

**इति छन्दः कौस्तुभे वर्णच्छन्दसि विषमवृत्याख्या**
**चतुर्थी प्रभा ।।४।।**

अथ गाथामाह—विषमेति। विषमाण्यक्षराणि येषु तादृशाः पादा यस्मिंस्तद् विषमाक्षरपादं छन्दो गाथा स्यात्। तथ सूत्रमेव तदष्टदशसप्तनवाक्षरपादं, तथा पादैरसमं विसदृशं त्रिपञ्चषड़ादि-पादमित्यर्थः। तदिदं स्वयमेव दर्शयति—"दशधर्मं न जानन्ति धृतराष्ट्र निबोध तान्। मत्तः प्रमत्तः उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः त्वरमाणश्च भीरुश्चालसः कामी च ते दश" इति भारते। अत्र पादत्रयात्मकं। पादे षट्कात्मकं वा गाथा छन्दः, अन्यदूह्यम्। अपरञ्च यदत्र शास्त्रे छन्द्वो नोक्तं, तत् सर्वं गाथेति सुरिभिर्बुधैः प्रोक्तं बोध्यम्। यद्यपि शेष छन्दसां गाथेत्येकैव संज्ञा कृता, तथापि छन्दश्चूड़ामण्यादि ग्रन्थाद्दोहक-प्रकीर्णकादि-संज्ञा बोद्धव्याः। ग्रन्थ-गौरवभयात्तान विवृत्ताः। (१)

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये**
**विषमवृत्ताख्याने चतुर्थी प्रभा ।।४।।**



# पञ्चमी प्रभा



## अथ वक्त्र-प्रकरणम् ।

**भवत्यर्द्धसनं वक्त्रं विषमञ्च कदाचन ।**
**तयोर्द्वयोरुपान्तेऽत्र च्छन्दस्तदधुनोच्यते ॥**

**वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि: स्यातम् ॥१**

इदानीं वक्त्र-प्रकरणं वक्तु प्रारभते—वक्त्रमिति। अनुष्टभ्य-ष्टाक्षरायां जातौ पादस्याद्यात् प्रथमादक्षरात् परौ नसौ नगण-सगणौ न स्यातां, अन्ये मादयः षड् गणाः यथेष्टं स्युः। अथाब्धे-श्चतुर्थादक्षरात् परो यगणः स्यादेवं चतुर्भिः पादैर्वक्त्रं छन्दः ख्यातं प्रसिद्धम्। अनुष्टुभित्या प्रकरणं, तेनाष्टमोऽपि वर्णः प्राप्तः।

अयम्भावः। वक्त्रं वक्त्र नामकमष्टाक्षरवृत्तं कदाचन कदाचित् अर्द्धसमं विषमञ्च इति द्विधा भवति। तयोः अर्द्धसम-विषमरूपेण द्विप्रकारयोर्वक्त्रयोः अन्तस्य अष्टमाक्षरस्य समीपम् उपात्तम्। तस्मिन् सप्तमाक्षरं यावदित्यर्थः, यत् छन्दः अक्षराणां लघुत्व गुरुत्वनियमः, अत्र अस्मिन् छन्दोग्रन्थे अधुना सम्प्रति तत् उच्यते कथ्यते। अत्रोपान्त इत्यनेन यावत् सप्तमाक्षरमेव लघुत्वगुरुत्वनियमः नतु अष्टमाक्षर इति सूचितम्। यदि अनुष्टुभि अष्टाक्षरपादे वृत्ते युग्भ्यां युग्माभ्यां द्वितीय-चतुर्थ-पादाभ्या-मित्याशयः, 'युग्भ्याम्' इत्यत्र ल्यव् लोपे पञ्चमी, द्वितीय-चतुर्थ-पादौ प्राप्य इत्यर्थः, मगौ मगण-गगणौ स्याताम्, तथा अब्धे श्चतुर्थाक्षरात् परः यः एको यगणः प्रतिपादं स्यादिति शेषः, तदा वक्त्रं वक्त्रनामकं वृत्तं ख्यातं कथितं कविभिरिति शेषः।

ग्रन्थकारोऽत्र वक्त्रस्य निरुक्तलक्षणमभिदधौ। हलायुधस्तु 'न प्रथमात् स्नौ' (पिङ्ग० १।१०) इति, 'द्वितीय-चतुर्थयो रश्च' (पिङ्ग० २।११) इति, 'वान्यत्' (पिङ्ग० ४।१२) इति च वक्त्रजातौ गणनिषेधकस्य सूत्रत्रयस्य यथाक्रमम् 'अत्र वक्त्रजातौ पादस्य प्रथमाद् वर्णादूर्ध्वं सगण-नगणौ न कार्य्यौ' इति। 'द्वितीय-चतुर्थयोश्च पादयोः प्रथमादूर्द्ध्वं रेफोऽपि न कर्त्तव्य इत्युपदेशः' इति। 'सगण-नगणाभ्यामन्यत् मकारादित्रिकषट्कमध्ये यत्किञ्चित् त्रिकान्तरं वा कर्त्तव्यम्' इति चार्थमभिधाय 'य चतुर्थात्' (पिङ्ग० ५।१३) इति पिङ्गलोक्तवक्त्रलक्षणं 'पादस्य चतुर्थादारादूर्द्ध्वं यकारः प्रयोक्तव्य' इत्येवं व्याचख्यौ। वृत्तरत्नाकरकारोऽपि पिङ्गलोक्त लक्षणमेवानुससारेति ग्रन्थान्तरीय विशेषोऽत्रानुसन्धेयः। वक्त्रस्य उदाहरणम्—

'वक्त्रं' युगभ्यां मगौ स्यातामब्धे र्योऽनुष्टुभिख्यातम्।
द्विरावृत्त्या श्लोकः पूरयितव्यः।

यदि अष्टाक्षरवृत्तस्य द्वितीय-चतुर्थचरणे मगण-गगणौ स्याताम्, एवं समस्त चरणेषु चतुर्थ अक्षरात् परं एको यगण, स्यात्, तदा वक्त्रनामकं छन्दः स्यात्।

वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम्।
बल्लवीनां मुरारातेश्चेतो भृङ्गं जहारोच्चैः॥१॥

**युजोर्जेन सरिद्भर्त्तुः पथ्या वक्त्रं प्रकीर्त्तितम् ॥२**

युजोर्जेनेति। युजोर्द्वितीय-चतुर्थयोः पादयोः सरिद् भर्त्तुश्चतुर्थादक्षरात् परवर्त्तिना जगणेन पथ्या वक्त्रं छन्दो भवति। शेषौ पादौ वक्त्रवत्। सर्वेषु पादेषु आद्योन्नसौ न कार्य्यौ। सामान्येन पूर्वोक्तापवादाभावात्। एवमग्रिमेष्वपि व्याख्येयम्। अर्थात् 'युजोश्चतुर्थतो जेन पथ्या वक्त्रं प्रकीर्त्तितम्।' यद् अष्टाक्षर-

वृत्तं युजोः युग्मयोः द्वितीय-चतुर्थपादयोरित्यर्थः, चतुर्थत श्चतुर्थाक्षरात् परेण जेन एकेन गगणेन युक्तं स्यादिति शेषः। तत् पथ्या वक्त्रं तन्नामकं वक्त्रं कीर्त्तितं कथितम् पण्डितैरिति शेषः। अत्र विषमयोश्चतुर्थादक्षरात् परं जगणेन भवितव्यमिति नियमनात् समयोर्यगणस्तु 'अब्धेर्यो' इत्यनेन सामान्यत एव प्राप्तः। एवञ्चास्मिन् समपादयोः पञ्चम-सप्तमवर्णौ लघू, षष्ठवर्णो गुरुः। विषमयोश्च पञ्चमो लघुः कर्त्तव्यः, अन्यत्र तु लघवो गुरवो वा भवेयुरिति नास्ति कोऽपि नियम इति पर्य्यवसितम्। उदाहरणम्—

रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे।
आसीद् गोपमृगाक्षीणां पथ्या वक्त्रमधुस्रुतिः।

गोपमृगाक्षीणां गोपवधूनां वक्त्रमधुस्रुतिः वदनसुधाक्षरणं मधुवासरे वसन्तकालीनदिवसे रासकेलि सतृष्णस्य रासक्रीड़ां कर्त्तुमभिलाषवतः कृष्णस्य सम्बन्धे पथ्या अनुकूला, हितकारिणीति यावत्, आसीद् अभूत्। गोपीनां वदनसुधापानेनैव कृष्णस्यासमयोत्थो रासक्रीड़ाभिलाषो निरवर्त्तत इति भावः ॥२॥

**छन्दो मञ्जर्य्यामत्र विशेषः—**

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरु षष्ठञ्च जानीयात् शेषेष्वनियमो मतः॥
प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम्।
लोकेऽनुष्टुबिति ख्यातं तस्याष्टक्षरता मता॥

पञ्चममिति। वक्त्रस्य सर्वत्र सर्वेषु चतुर्ष्वेव पादेषु इत्यर्थः, पञ्चमाक्षरं लघु ह्रस्वम्, तथा द्विचतुर्थयोः पादयोः सप्तमं सप्तमाक्षरं लघु ह्रस्वम्। द्विचतुर्थयोरिति कथनेन प्रथम-तृतीययोः सप्तमं गुरु भवतीति सिद्धम्। किञ्च, षष्ठं षष्ठाक्षरम् अर्थात् चतुर्षु पादेषु इत्याशयः। दीर्घं जानीयात्—अवगच्छेत्। शेषेषु

उक्तावशिष्टेषु अक्षरेषु अनियमः मतः, कचिन्नियमो नास्तीत्याशयः प्रकटीकृत इत्यर्थः। केचित् महाकविप्रयोगेष्वपि प्रथमादिपादेषु पञ्चमाक्षरस्य गुरुत्व दर्शनात्, 'सर्वत्र चतुर्थपाद एव नतु अन्य पादे' इत्येवमपि व्याचख्युः। प्रयोगे इति। केऽपि विद्वांसः एतत् प्रागुक्तं वक्त्रलक्षणं प्रयोगे व्यवहारकाले प्रायिकं बहुलं प्रयोग-बहुलमिति भावः, प्राहुः कथयन्ति। इदं वक्त्रं लोके अनुष्टुप् इति नाम्ना ख्यातं कथितम्। तस्य एतस्य अनुष्टुबपरपर्य्यायस्य वक्त्रस्य अष्टाक्षरता प्रतिपादमष्टाभिरक्षरैर्निबद्धता मता अभिप्रेता पण्डितानामिति शेषः। केचिदष्टाक्षरपादानि सर्वाणि छन्दांसि 'अनुष्टुप्' इति व्यपदिशन्ति। केचिच्च—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघुपञ्चमम्।
द्विचतुः पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः॥

इत्येतदेवानुष्टुभो लक्षणमित्यभिधाय तस्याः 'श्लोका' परपर्य्यायित्वमङ्गीकुर्वते। अपरे च—

'पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीयादेतत् पद्यस्य लभणम्॥'

इति लक्षणमुक्त्वा अनुष्टुभ एव 'पद्य' नाम्ना व्यवहरन्ति। वस्तुतस्तु अनुष्टुबिति चित्रपदा-माणवक-विद्युन्माला-समानिका-प्रमाणिका-गजगति-हंसरुत-नाराचिका-संज्ञाकानामष्टाक्षरसमपादानां छन्दसाम्, वक्त्रमिति च वक्त्र-पथ्यावक्त्र-विपरीतपथ्यावक्त्र-चपला वक्त्र–विपुलावक्त्र–जविपुलावक्त्र—भविपुलावक्त्र–रविपुलावक्त्र–न विपुलावक्त्र—तविपुलावक्त्र–मविपुलावक्त्र–सविपुलावक्त्र–सङ्कीर्ण-विपुलावक्त्र नामकानामसमार्धसम-पादानामष्टाक्षराणां छन्दसां साधारणं नामेति हृदयम्। उदाहरणानि पिङ्गलादावनुसन्धेयानि। इदमत्रावधेयम्—शास्त्रेषु प्रयोगमर्हतामपि येषां छन्दसां लक्षणानि पिङ्गले वृत्तरत्नाकरे च नोपलभ्यन्ते तेषां सिद्ध्यर्थं 'गाथे'ति

काचित् संज्ञा पिङ्गलवृत्तरत्नाकरकाराभ्यामभ्यधायि। यथा च ताभ्यामुक्तम्—'अत्रानुक्तं गाथा' (पिङ्ग० ८ अ० १ सू०) इति।

विषमाक्षरपादं वा पादैरसमं 'दशधर्म'वत्।
यच्छन्दो नोक्तमत्र गाथेति तत् सूरिभिः प्रोक्तम्॥

(वृत्त० ५ अ० १२ ल०) इति च। तत्र प्रथमे अष्टाभिः, द्वितीये दशभिः, तृतीये सप्तभिः, चतुर्थे च पादे नवभिरक्षरैर्निबद्धं 'विषमाक्षरपादमि'ति वृत्तरत्नाकरोक्तमूलमेवाऽऽद्यस्योदाहरणम्। केचित् 'मधुकैटभौ दुरात्मानावतिवीर्य्यपराक्रमौ' (चण्डी १ अ० ७१ श्लोक) इति। 'महिषेऽसुराणामधिपे देवानाञ्च पुरन्दरे' (चण्डी २ अ० १ श्लोक) इति च देवी माहात्म्यगतश्लोकार्धद्वयमप्याद्यस्योदाहरणपक्षे स्थापितवन्तः। अन्यत्राप्येवमूह्यम्। 'पादैरसमम्' इत्यस्य त्रिपञ्चषड़ादिपादमित्येवमर्थः, नतु समसंख्याकपादरहितमिति, तथात्वे षट् पादाद्यसंग्रहापत्तेः, अतएवोक्तं केदारेण—'शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः' (वृत्त र० १ अ० १८ ल०) इति। पादैरसममिति द्वितीयस्य—

दशधर्मं न जानन्ति धृतराष्ट्र निबोध तान्।
मत्तः प्रमत्तः उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः॥
त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश।

इति भारतोक्तं षट्चरणं छन्द उदाहरणम्।

केचित् असमपादानां दशाष्टादशादिपदानां नाटकादिस्थ नान्द्यादीयामप्यनेन गाथात्वमुक्तं भवतीत्याहुरिति ज्ञेयम्।

**ओजयो र्जेन वारिधेस्तदेव विपरीतादि॥३**

**ओजयोर्जेने। ओजयोः प्रथम-तृतीयपादयोर्विषमयो वारिधेश्चतुर्थादक्षरात् परवर्त्तिना जगणेन तत् पथ्या वक्त्रं विपरीतादि**

**भवति । विपरीत पथ्या वक्त्रं नाम छन्दः स्यात् शेषौ पादौ वक्त्रवत् ॥३॥**

**चपला वक्त्रमयुजो र्न-कारश्चेत् पयोराशेः ॥४**

चपलावक्त्रमिति । प्रथमतृतीययोः पादयोः विषये पयोराशेश्चतुर्थादक्षरात् परश्चेन्नकारस्त्रिलघुर्गगणः स्यात्, तदा चपलावक्त्रं छन्दः । शेषौ पादौ वक्त्रवत् । ननु न विपुलेयं चपलावक्त्रेण संकोर्णा, उभयत्र विषमपादयोरब्धितस्तगणाः, परस्मिंस्तगण इत्यसाङ्कर्य्यात् ॥४॥

**यस्यां लः सप्तमो युग्मे सा युग्मविपुला मतः ॥५**

यस्यां ल इति । यस्यामनुष्टुभि युग्मे द्वितीयचतुर्थे च पादे सप्तमी वर्णो लघुर्भवति, तद् युग्मविपुला छन्दः । शेषौ पादौ वक्त्रवत् । अथवा युग्मेति स्वमित्रस्य कवेः सम्वोधनं, तेन विपुला छन्द इत्यर्थः । न येयं पथ्या-वक्त्रेण गतार्थेति वाच्यम् । तस्मिन् युक् पादयोश्चतुर्थादक्षरात् जगणः आवश्यकः । अस्यान्तु तयोः सप्तमलघुत्वमावश्यकम् । तत्वं च तगणादिभिरपि सिद्धेदित्यसाङ्कर्य्यात् । विपुला भेदेष्वयुक्पादयोर्यादिभिर्यगण-मपवदिष्यति । पथ्या वक्त्रे तु जगण एव तयोरवतिष्ठते ॥५॥

**सैव तस्याखिलेष्वपि ॥६**

**[अयुजोरित्यापूर्त्तेरनुवर्त्यम्]**

**सैव तस्येति । सैव तस्याचार्य्यस्य मते लघुसप्तमैश्चतुर्भिरपि पादैर्विपुला छन्दः स्यादित्यर्थः ॥६॥**

**भेनाब्धितो भाद् विपुला ॥७**

भेनाब्धित इति । अयुजोर्नकारश्चेदित्यत्यस्मादयुजोरित्य-

नुवर्त्तते। अयुजोः प्रथम-तृतीययोः पादयोरब्धितश्चतुर्थवर्णाद्यदि यगणं वाधित्वा भकारः स्यात्तदा भ-विपुला नाम छन्दः। युजोस्तु सप्तमलघुत्वमस्त्येवेति बोध्यं। एवमग्रिमेषु च। यदुक्तं 'ओजे तुर्य्यान्नितभरमसैर्न विपुलादयः। अस्त्वोजे प्राय स्तुर्य्ये गुर्युजि षड्भ्यो षड्भि लघु ध्रुव इति ॥७॥

**इत्थमन्यारश्चतुर्थात् ॥८**

इत्थमिति। अयुक् पादयोश्चतुर्थादक्षराद् यदि रगण-स्तदान्या र विपुलेत्यर्थः ॥८॥

**नोऽम्बुधेश्चेन्न विपुला ॥९**

नोऽम्बुधेरिति। अयुक् पादयोश्चतुर्थादक्षरान्नगणश्चेत्तदा न विपुला छन्दः ॥९॥

**तोऽब्धेस्त पूर्वान्या भवेत् ॥१०**

**दश वक्त्रभेदाः।**

**इति छन्दः कौस्तुभेवक्त्रनिरूपणं पञ्चमी प्रभा ॥५॥**

तोऽब्धिरिति। अयुक् पादयोश्चतुर्थादक्षरात्तगणश्चेत्तदा त विपुला छन्दः ॥१०॥ इदं वक्त्र प्रकरणं मात्राछन्दः केचिदाहुः। अत्र तु वर्णच्छन्दः कथितं तत्त्वेप्युपपयेः। अत उभयान्तराले पठितमेतत्।

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये**

**वक्त्रनिरूपणं पञ्चमी प्रभा ॥५॥**



# षष्ठी प्रभा



**अथ मात्रावृत्तेष्वार्य्यां तावदाह—**

**लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः ।**
**षष्ठो जो नलघु नलघु वा प्रथमेऽर्द्धे नियतमार्य्यायाः ॥१**

वर्णमात्रादि भेदेनेति । क्रमप्राप्तानि वर्णच्छन्दांस्यभिधाय इदानीं तत्क्रमप्राप्तानि मात्राछन्दांस्यभिदधान स्तेषु तावदार्य्या प्रकरणं वक्तुमारभते—अथ मात्रावृत्तेष्विति । आर्य्यादिषु संस्थिताश्चतुष्कला पञ्चगणा ज्ञेया इत्युक्तेश्चतुर्मात्रगणानामयं विषयो बोध्यः । लक्ष्मैतदिति । आर्य्यायाः प्रथमे अर्द्धे आद्ये दले एतन्नियत लक्ष्मलक्षणं भवति । एतत् किमित्याह—गोपेताः सप्तगणा इति यत् चतुःकलाः सप्तगणाः सगुरवः पूर्वार्द्धे नियमाद् भवन्तीत्यर्थः । अत्रापवादः—इह आर्य्यायां विषमे प्रथमे तृतीय-पञ्चम-सप्तमरूपे गणे जगणो मध्य गुरुर्गणो न भवति । प्रथमेऽर्द्धे षष्ठो गणो जः स्यान्मध्वगुरुगणः स्यात् । अथवा न लघू स्यातां चतुर्लघुर्गणः स्यादित्यर्थः ।

अर्थात् आर्य्याया आर्य्यानामकजातेः प्रथमे अर्धे पूर्वार्धे एतत् लक्ष्म इदं लक्षणं नियतं निश्चितं भवतीति शेषः । किं तदित्याकाङ्क्षायामाह—सप्तेति । सप्त सप्तसंख्यकाः गणाः ज्ञेयाः सर्वान्तिमध्यादिगुरवोऽत्र चतुष्कलाः, इत्यादिना प्राक्प्रतिपादिता श्चतुष्कला गणा इत्यर्थः, गोपेता अन्ते एकेन गुरुणा युक्ताः, भवेयुरिति शेषः । अस्यामार्य्याजातौ विषमे अयुग्मे, प्रथमे तृतीये पञ्चमे सप्तमे इत्याशयः । जगणः मध्यगुरुरूपो गणः न भवति ।

किन्तु षष्ठस्तत् संख्यकः समो गणः जश्च मध्यगुरुरूपो जगण एव नश्च लघुश्च तयोः समाहारः नलघु सर्वलघुरूप एव वा भवतीत्यर्थः। अत वा-शब्दो विकल्पार्थः। तेन क्वचित् षष्ठगण-स्थाने जगणः क्वचिच्च नगणसहित एको लगणो भवेदिति सूचितम्। चकारश्चावधारणार्थः क्रमभेदेन 'नलघु' इत्यनन्तरमपि पठनीयः, मध्यगुरु-चतुर्लघुरूपयोरेतयोः समगणीयत्वे बाधाविरहेण उभयो-रवधारणस्यैव न्याय्यत्वात्। ज एव वा नलघु एव वेत्यर्थः। 'षष्ठो जश्च नलघु वा' इत्यत्र क्वचित् 'षष्ठो य नलघू वा' इति पाठः। तथात्वे 'अयं प्रागुक्तः जगण। षष्ठः षष्ठस्थानको भवेत्, अर्थात् जगणेन षष्ठस्थानं पूरणीयमित्याशयः, वा अथवा षष्ठे गणे इत्यर्थः। नश्च लघुश्च नलघू नगण-लगणो त्रिलघुरूप एको नगणः एक लघुरूप एको लगणश्चेत्यर्थः। भवत इति शेषः। इत्येवमर्थः करणीयः। अत्र "गुरूपेतत्वोक्त्या यद्यपि 'स्वरा अर्धं चाऽऽर्य्यार्धम्' इति पिङ्गलसूत्रे अर्धं चेति ग्रहणात् सार्धाः सप्तगणा भवतीति सामान्यत उक्तम्, तथाप्यर्धगणस्थाने एको गुरुरेवान्ते कार्य्यः, नतु लद्वयमिति सूचितम्" इति नारायणभट्टाः। केचिच्च "गोपेता इति द्विमात्रिकस्योपलक्षणम्, तथा चान्ते मात्राद्वितयात्मक लघुद्वयप्रयोगेऽपि नाऽऽर्य्यत्व व्याघातः। अतएव सर्वलघुरपि आर्य्या भवतीति केचिन्मन्यन्ते, इत्याहुः। इह वक्ष्यमाणोदाहरण-द्वितयस्यावसाने एकैक गगणस्य विद्यमाणतया ग्रन्थकर्त्तृमतं नारायणभट्टमतमेवानुकूलयतीति सम्भावयामः। द्वितीयमतविशेषः पिङ्गलादावनुसन्धेयः॥१॥

SS। SS। ।।S।

**षष्ठे द्वितीयलात् परके न्ले मुखलाच्च स यतिपदनियमः।**

**परमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥२**

अथ यतिमाह—षष्ठे इत्यादिना। द्वितीय लादिति ल्यब् लोपे कर्मणि पञ्चमी। षष्ठे गणे न्ले चतुर्लघोर्गणस्य प्रथम-लघ्वनन्तरं यति-सहितं पदं नियमेन समाप्यत इत्यर्थः। तथा षट्के सप्तमे न्ले सति षष्ठात् परस्मिन् सप्तमे गणे चतुर्लघौ सति मुखलादादि-लघुमारभ्य यतिपदनियमः षष्ठगणान्ते यति-रित्यर्थः। अथोत्तरार्धयतिस्थानमाह—चरमेऽर्द्धे द्वितीये दले पञ्चमके गणे न्ले सति तस्मात् मुखलादिति लघुमारभ्य स यतिपदनियमः चतुर्थगणान्ते यतिरित्यर्थः। इह द्वितीयेऽर्द्धे षष्ठो गणो लगण एव लकारैवैकः प्रयोज्यो नतु चतुष्कल इति पूर्वार्द्धविशेषः। पूर्वार्द्धे त्रिंशत्कलाः, परार्द्धे तु सप्तविंशतिरिति सप्तपञ्चाशन्मात्रा छन्दः ॥२॥

प्रथमार्धे गणान् निर्दिश्य तत्र स यतिपदनियमनिरूपण-पुरःसरं द्वितीयार्धमभिलक्षयितुमार्य्यान्तिरमारभते—षष्ठ इति। तत्राऽऽदौ पूर्वार्धस्य यतिव्यवस्थामाह—षष्ठ इति। षष्ठे गणे न् च लश्च तयोः समाहारः तस्मिन् न्ले नगण-लगणात्मके चतुर्लघु रूपे सतीत्यर्थः: द्वितीय-लात् द्वितीयलघोरन्ते इत्याशयः, तथा षट्के षष्ठापेक्षया परस्मिन् सप्तमे इत्यर्थः, गणे न्ले नगण-लगणात्मके चतुर्लघुरूपे सतीत्यर्थः। मुखलात् प्रथमलघोः, अर्थात् चर्लघुरूपस्य सप्तमगणस्य प्रथमलघोः प्रागिति शेषः, षष्ठगणस्थाने इत्याशयः। सयतिपदनियमः यतिविशिष्टस्य सुप्तिङन्तरूपस्य पदस्य नियमः व्यवस्थापनम्, कर्त्तव्य इति शेषः। एतेन यत्र षष्ठो गणश्चतुर्लघुरूपो भवेत् तत्र तस्य प्रथमलघोरन्ते, यत्र च सप्तमो गणश्चतुर्लघुरूपो भवेत् तत्र षष्ठगणस्यान्ते च सयतिक-पदव्यवस्था ज्ञेया। षष्ठे जगणे तु नास्ति काऽपि व्यवस्था इति पर्य्यवसितम्। सयतिकपदशेषार्धलक्षणमाह—चरमे इति। चरमे अर्धे आर्य्याया शेषार्धे पञ्चमके पञ्चमे गणे न्ले नगण-

लगणात्मके चतुर्लघुरूपे सतीत्यर्थः, तस्मात् मुखलात् अर्थात् चतुर्लघुरूपस्य पञ्चमगणस्य प्रथमलघो प्रागिति शेषः, चतुर्थगणस्यान्ते इत्याशयः। सयतिपदनियम इत्यावृत्त्यान्वयः। अत्र "यतिमात्रे चामीकरादिवत् पूर्वापरभागयोरनेकाक्षरत्वे पदमध्ये यतिर्मा भूदिति पदस्यापि नियम उक्ता" इति नारायणभट्टाः। आर्य्यायां पादान्ते यतिरिति केचित्। हलायुधस्तु 'स्वरा अर्धश्चाऽऽर्य्यार्थम्' इति सूत्रस्य व्याख्यायाम्—'अत्र अर्धस्य लक्षणं कुर्वाणः एवं ज्ञापयति आचार्य्यः यत् आर्य्यायामवान्तपादव्यवस्था नास्ती'त्याह। इह अस्मिन् आर्य्यायाश्चरमेऽर्द्धे षष्ठः षष्ठगणः लः एकलगणात्मको भवति। अत्र द्वितीयार्द्धे षष्ठस्थाने प्रथमार्द्धवत् मध्यगुरौ सर्वलघौ वा चतुष्कले गणे प्राप्तेतदपवादकोऽयम्, एककलो लकारो विधीयत इत्येवगन्तव्यम्। इह चतुर्थगणान्ते सयतिकपदनियमनं षष्ठगणस्य एकलकारात्मकत्वकरणञ्च पूर्वार्धाद् विशेषः। सर्वमन्यत् पूर्वार्धलक्षणमुत्तरार्धेऽतुल्यमेवेति स्थितम्। एवञ्च प्रथमार्द्धे त्रिंशद् द्वितीयार्धे च सप्तविंशतिरिति साफल्येनाऽऽर्य्यायां सप्तपञ्चाशन्मात्रा भवेयुः। इदमार्य्यायाः सामान्यलक्षणम्॥

जगण-षष्ठरूपामार्य्या उदाहरणम्—

१ २ ३ ४ ५ ज ६ ७ म
कृष्णः शिशुः सुतो मे वल्लवकुलटाभिराहृतो न गृहे।
१ २ ३ ४ ५ ६ ७ ग
क्षणमपि वसत्यसाविति जगाद गोष्ठ्यां यशोदार्य्या॥

कृष्ण इति। मे मम सुतस्तनयः कृष्णः शिशुरर्भकः। असौ कृष्णः वल्लवकुलटाभिः गोपजातीय नष्टचरित्राभिः स्त्रीभिः आहृतः मनोरथानुरूपदेशं इति आर्य्या पूज्या यशोदा नन्दगोपगृहिणी गोष्ठ्यां वल्लवीसंसदि जगाद उवाच।

न-लघुषष्ठाया आर्य्याया उदाहरणम्—

१ २ ३ ४ ५ न ल ६ ७ ग

वृन्दावने सलीलं वल्गुद्रुमकाण्डनिहिततनु यष्टिः।

१ २ ३ ४ ५ ६ ७ ग

स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः॥

वृन्दावन इति। वृन्दावने—वृन्दाख्ये सलीलं सविभ्रमं यथा स्यात्तथा वल्गुश्चासौ द्रुमश्चेति वल्गुद्रुमः मनोहरपादपः, तस्य काण्डे स्कन्धे निहिता स्थापिता तनु यष्टिः देहयष्टिर्येन स तथोक्तः, तथा स्मेरम् ईषद्धास्ययुक्तं यन्मुखं वदनं तस्मिन् अर्पितः स्थापितः वेणुः वंशी येन तादृशः कृष्णः यदि चेत् मनसि मानसे वर्त्तते इति शेषः, तदा स्वर्गः क्वः? स्वर्गोऽपि हेय एव इति भावः॥१-२॥

**तद्भेदानाह—**

**पथ्या विपुला चपला मुखचपला जघनचपला च।**

**गीत्युपगीत्युद्गीतय आर्य्या गीतिश्च नवधाऽऽर्य्या॥३**

अथार्य्या—विशेषान् वक्तुं तास्तावदुद्दिशति—तद्भेदानिति। आह उद्दिशतीत्यर्थः। नाममात्रेण वस्तुसङ्कीर्त्तनं ह्युद्देशः। अर्थात् निरूक्तरूपाया आर्य्याया नवधा भेदं प्रदर्शयितुमाह—पथ्येति। पथ्या, विपुला, चपला, मुखचपला, जघनचपला, गीतिः, उपगीतिः, उद्गीतिः, आर्य्यागीतिश्च इति आर्य्याया नवधा भेदः। हलायुधमते आर्य्याया अशीति र्भेदाः। यदुक्तम्—

एकैव भवति पथ्या तिस्रो विपुलास्ततश्चतस्रस्ताः।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोड़शाऽऽर्य्याः स्युः॥
गीतिचतुश्चतुष्टयमित्थं प्रत्येकं षोड़शप्रकारं स्यात्।
साकल्येनाऽऽर्य्यणामशीतिरेवं विकल्पाः स्युः॥ इति केचिदस्या

एकनवतिर्भेदा इत्यपि मन्यन्त इति ज्ञेयम्। एतासां नामान्युदाहरणादि च ग्रन्थगौरवभियाऽत्र न लिख्यन्ते। तानि तु ग्रन्थान्तरेष्वनुसन्धेयानि ॥३॥

ताः क्रमेणाह—

**प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता पथ्या ॥१**

**[न्यूनं प्रकल्प्य-लक्ष्यं बोध्यम्, एवमग्रेषु च।]**

तासां लक्षणानि क्रमाद् दर्शयितुमारभते—ताः क्रमेणाहेति। आह लक्ष्यतीत्यर्थः। प्रथमेति—यस्या उभयोरपि दलयोः प्रथमे गणस्य त्रये यतिः स्यात्, सा पथ्योच्यते। उत्तरार्द्धे प्रकल्प्य लक्ष्यं बोध्यम्। अर्थात् सम्प्रति तासां प्रत्येकतो लक्षणंवक्तुमुपक्रमते—प्रथमेत्यादिना। उभयोर्दलयोः पूर्वार्धपरार्धयोः प्रथमगणत्रयात् प्राथमिकगण-त्रितयात् परमिति शेषः। विरतिर्यतिर्यस्यां सा तादृशो आर्य्या इत्यर्थः। पथ्या तन्नाम्ना प्रकीर्त्तिता कथिता, कविभिरिति शेषः। श्रुतबोधकारमते त्वियमेवाऽऽर्या इति केचित्।

उदाहरणम्—

जय जय नाथ मुरारे केशव कंसान्तकाच्युतानन्त।
कुरु करुणामिति भणितिः पथ्या भवरोगदुःस्थानाम् ॥

हे नाथ प्रभो! हे मुरारे मुररिपो! हे केशव विष्णो! हे कंसान्तक कंस निसूदन! हे अच्युत कृष्ण! हे अनन्त अपार! जय जय सर्वोत्कर्षेण वर्त्तस्व। त्वं करुणां कृपां कुरु विधेहि इति एवंरूपो भणित्तिः कथनं भवरोगदुःस्थानां भवः संसार एव रोगः पीड़ा, तेन दुःस्थानां पीड़ितानां पथ्या अनुकूला, हितकारिणीति यावत्, भवतीति शेषः। हरिनामकीर्त्तनमेव संसारपीड़ानिवर्त्तकमिति भावः। इह प्रथमार्धे 'मुरारे' इत्यत्र

'रारे' इत्यन्ता एका द्वितीयार्धे 'भणिति'रित्यन्ता चापरा यतिरिति लक्षणसङ्गतिः ॥१॥

**संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।**

**यस्यास्तां पिङ्गलनागो 'विपुला'मिति समाख्याति ॥२**

यस्या आदिमं—गणत्रयं संलङ्घ्य अतिक्रम्य द्वयोरपि दलयोः पादो यतिर्भवति, तां विपुलामिति नागः पिङ्गलः समाख्याति वदतीत्यर्थः। अर्थात् यस्या आर्य्यायाः द्वयो शकलयोः खण्डयोः पूर्वार्धापरार्धयोरित्यर्थः, आदिमं गणत्रयं प्रथमान् त्रीन् गणान्, संलङ्घ्य लङ्घयित्वा, प्रागुक्तं द्वादशमात्रात्मक-यतिस्थानमतीत्येत्याशयः, पादः परिच्छेदविशेषः, यतिरिति यावत्, भवति। पिङ्गलनागः अनन्तः इति उक्तप्रकारं। तामार्य्यां विपुलां समाख्याति विपुलेति नाम्ना निर्द्दिशति। इति-शब्दोऽत्र प्रकार-वचनः। एवञ्च इति नाऽनभिहितत्वाद् विपुलामिति कर्मणि द्वितीयाया नासाधुत्वमिति ज्ञेयम्। पथ्यायां गणत्रितयान्ते यतिरिति पूर्वतोऽस्या भेदः। उदाहरणम्—

पुंसां कलिकालव्यालहतानां नास्त्युपहतिरल्पाऽपि ।
वीर्य्यविपुला मुखे चेत् स्याद् गोविन्दाख्यमन्त्रकला ॥

पुंसामिति। कलिकाल एव व्यालो भुजङ्गः, तेन हतानाम् अभिभूतानामित्यर्थः। पुंसां जनानां मुखे आस्ये चेद् यदि वीर्य्येण तेजसा विपुला महती गोविन्दाख्यमन्त्रकला गोविन्द इति आख्या नाम यस्य तादृशस्य मन्त्रस्य कला लेशः स्याद् वर्त्तेत, तदा अल्पाऽपि क्षुद्राऽपि उपहतिः विघ्नः नास्ति न भवति ॥२॥

**दलयोर्द्वितीय-तुर्य्यौ गगौ जकारौ तु यत्र 'चपला' सा ॥३**

**द्विरावृत्त्या श्लोकः पूरयितव्यः ।**

दलयोरिति। यस्या द्वयोर्दलयो द्वितीयतुर्यौ गगौ जकारौ मध्यगुरू स्यातां सा चपलोच्यते। उत्तरार्धं कल्पयित्वा लक्ष्यं बोध्यम्। अर्थात् यत्र यस्यामार्य्यायां दलयोः द्वयोः खण्डयोः पूर्वर्धापरार्धयोरित्यर्थः। द्वितीयश्च तुर्यश्च द्वितीय-तुर्यौ द्वितीय-चतुर्थौ गणाविति शेषः। गश्च गश्ग गगौ तौ स्तः, (अत्र 'गणौ' इति पाठान्तरमस्ति, तत्तु पिङ्गलादिदर्शनात् परिहृतम्) अनयोरिति गगौ अर्थात् पुरः पश्चात् स्थितगुरुमध्यगतौ, जकारौ जगणस्वरूपौ स्यातामिति शेषः। सा आर्य्या चपला तदाख्यका भवतीति शेषः। अत्र जकारस्य पुरः पश्चाद्वर्त्तित्वेन गकारौ न विधीयते, तथा सति द्वितीयगणस्य षट्कलत्वं स्यात्। किन्तु जकारस्य गुरुद्वय-मध्यगतत्वं यथा भवेत् तथा प्रथम-तृतीय-पञ्चमगणाः कर्त्तव्याः। तथा च यत्राऽऽर्यायां प्रथमो गणो द्विगुरन्तगुरुर्वा, तृतीयो द्विगुरुः, पञ्चमो द्विगुरुरादिगुरुर्वा, द्वितीय-चतुर्थौ च मध्यगुरू भवतः, सा चपला नामा आर्या इति फलितम्। तु-कारोऽत्र पादपूरणे। उदाहरणम्—

चपला नचेत् कदाचिन्नृणां भवेद्भक्तिभावना कृष्णे।
धर्मार्थकाममोक्षास्तदा करस्था न सन्देहः॥

चपलेति। चेद् यदि कृष्णे हरौ नृणां जनानां भक्तिभावना पूज्यत्वबुद्धिपूर्विका-चिन्ता कदाचिद् जातु चपला चञ्चला, अस्थिरा इति यावत्, न भवेत्, तदा धर्मश्च अर्थश्च कामश्च मोक्षश्च ते धर्मार्थकाममोक्षाश्चतुर्वर्गा इत्यर्थः। करस्थास्तादृश भावुकानां करतलगता एव भवेयुरिति शेषः। न सन्देहः—अत्र संशयोः नास्तीत्यर्थः। ये जना भक्तिपूर्वकं हरिं चिन्तयन्ति, ते चतुर्वर्गान् करस्थानेव लभन्ते इत्याशयः॥३॥

**आद्यं दलं समस्तं भजेत लक्ष्म चपला गतं यस्याः ।**

**शेषः पूर्वजलक्ष्मा 'मुखचपला' सोदिता मुनिना ॥४**

आद्यमिति। यस्या आद्यं दलं पूर्वार्द्धे चपलाया लक्षणमाश्रयेत्, शेषं उत्तरार्द्धे तु पूर्वजलक्ष्मार्या उत्तरार्द्धलक्षणभाक् स्यात्, सा मुखचपला मुनिना काश्यपेनोक्तेत्यर्थः। अर्थात् यस्या आर्यायाः आद्यं दलं प्रथमं खण्डम्, पूर्वार्द्धमित्यर्थः। समस्तं सर्वं चपलागतं प्रागुक्तचपलार्यास्थितं लक्ष्मलक्षणं भजेत आश्रयेत्, पूर्वार्द्धचपलावद् भवतीति भावः। शेषः उत्तरार्द्ध तु पूर्वजलक्ष्मा प्रागुक्तार्या-लक्षणयुक्तो भवति, सा मुनिना पिङ्गलेन मुखचपला तदाख्यका आर्या उदिता कथिता। उदाहरणम्—

कृष्ण प्रवञ्चकस्त्वं दृढं न ते प्रेम गच्छ तत्रैव।

यत्र भवति ते रागः काऽपि जगादेति मुखचपला ॥

हे कृष्ण ! हे हरे ! त्वं प्रवञ्चकः अतिदूर्त्तः असीति शेषः। ते तव प्रेमप्रणयः न दृढं न स्थिरम्, एकदा एकस्यामन्यदा चान्यस्यां प्रेम्णो दर्शनादित्याशयः। अतएव इदानीं यत्र यस्यां नायिकायां ते तव रागः आसक्तिः, प्रेम इति यावत्, भवति वर्त्तते तत्रैव गच्छ व्रज, इति एवं मुखचपला मुखरा काऽपि अनिर्दिष्टा गोपरमणी जगाद उक्तवती ॥४॥

**याऽऽर्याद्यदलगमर्द्धे प्रथमेऽप्रथमे दले तु चपलायाः।**

**लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥५**

येति। या प्रथमेऽर्द्धे आर्याद्यादलगं लक्ष्माश्रयेत्, आर्यापूर्वार्द्धलक्षणं भजेत्, अप्रथमे द्वितीयेऽर्द्धे तु चपलाया लक्ष्माश्रयेत् चिह्नं प्राप्नुयात्, सा जघनचपला विशुद्धधीभिरुक्ता। मुखचपलेव

व्यत्यय रचिता सती जघनचपला भवतीत्यर्थः। अर्थात्—

प्राक्प्रतिपादितमर्थे प्रथमेतरे च चपलायाः।
लक्ष्माऽऽश्रयेत सोक्ता विशुद्धधीभि'र्जघनचपला'॥

या आर्य्या प्रथमे अर्धे पूर्वार्धे प्राक्प्रतिपादितं प्रागुक्तम्, अर्थादार्य्योक्तं लक्ष्मलक्षणम्, तथा प्रथमेतरे प्रथमेव्यतिरिक्ते च, द्वितीयेऽर्द्धे चेत्यर्थः, चपलायाः 'दलयोर्द्वितीयतुर्य्यौ गगौ जकारौ तु यत्र चपला सा' इत्युक्तलक्षणायाश्चपलार्य्याया इत्यर्थः। लक्ष्म-लक्षणम् आश्रयेत यजेत, यस्याः प्रथमार्धमार्य्यावद् द्वितीयार्धञ्च चपलावद् भवतीति भावः। सा विशुद्धा निर्मला धीर्बुद्धिर्येषां ते विशुद्धधियः, तैः निर्मलबुद्धिभिः पण्डितैरित्यर्थः। जघनचपला तदाख्यका आर्य्या उक्ता कथिता। उदाहरणम्—

कृष्णः शृङ्गारपटुर्यौवनमदरागचपलललिताङ्गः।
आसीद् व्रजाङ्गनानां मनोहरो जघनचपलानाम्॥

कृष्ण इति। यौवनमदेन तारुण्यगर्वेण यो रागः विषय-वासनारूपोऽभिलाषः, तेन चपलं चञ्चलं ललितं सुन्दरञ्च अङ्गं शरीरं यस्य स तथोक्तः, तथा शृङ्गारे निधुवनक्रीड़ायां पटुर्निपुणः कृष्णः जघनचपलानां चञ्चलनितम्बपुरोभागाणां रत्युत्सुकाना-मित्याशयः। व्रजाङ्गनानां व्रजबधूनां मनोहरः हृदयाकर्षक आसीद् अभवत्॥५॥

**आर्य्या प्रथमार्धसमं यस्यामपरार्द्धमाह तां गीतिम्॥६**

आर्य्येति। यस्यां दलद्वयमार्य्या-पूर्वार्द्धलक्षणघटितं स्यात्, सा गीतिरित्यर्थः। षष्टिमात्रं छन्दः। द्विः पाठात् पद्यपूर्त्तिः। अर्थात् यस्यां अपरार्धं शेषार्धम् अर्थात् प्रथमार्धञ्च आर्य्या प्रथमार्ध-समम् आर्य्यायाः 'लक्ष्मैतत् सप्तगणा गोपेता' इत्यादिना प्रागभिहितायाः प्रथमार्धेन पूर्वार्धेनसमं तुल्यं भवतीति शेषः।

तां गीतिं तन्नामिकामार्य्याम् आह कथयति, सुधीजन इति शेषः। प्राक्तनग्रन्थे जघनचपलायाः प्रथमार्द्धस्य आर्य्या प्रथमार्धोक्तलक्षण-घटितत्वोक्त्या अत्र प्रथमार्धलक्षणेऽनुक्तेऽपि ग्रन्थान्तरसंवादात् तदेवात्राधिक्रियते—इति ज्ञेयम्। एतेनास्या दलद्वयेऽपि आर्य्यायाः प्रथमार्धलक्षणं भवतीति फलितम्। उदाहरणम्—

केशववंशीगीतिर्लोकमनोहरिण्यहारिणी जयति।
गोपीमानग्रन्थेर्विमोचनी दिव्यगायनाश्चर्य्या॥

केशवेति। गोपीनां वल्लवीनां मानग्रन्थेः प्रणयाभिमाणरूप-बन्धनस्य विमोचनी विध्वंसिनी, छेदिका इति यावत्। तथा लोकानां जनानां मनांसि मानसानि एव हरिणा मृगाः, तान् हर्त्तुं वशीकर्त्तुं शीलं यस्यास्तादृशी, वंशीरवश्रवणेन हरिणानां मुग्धताया लोकसिद्धत्वादत्र हरिपदोपादानम्। किञ्च, दिव्याः स्वर्गीयाः ये गायना गायकाः गन्धर्वा इत्यर्थः, तेषाम् आश्चर्य्या विस्मयजननी केशववंशीगीतिः कृष्णस्य वेणुसङ्गीतं जयति सर्वोत्कर्षेण वर्त्तते इत्यर्थः॥६॥

**आर्य्या परार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम्॥७**

आर्य्या परार्धेति। यस्यामार्य्योत्तरार्द्धघटितं दलद्वयमपि स्यात्, सोपगीतिरित्यर्थः। चतुःपञ्चाशन्मात्रं छन्दः। द्विः पाठात् पद्यपूर्त्तिः। अर्थात् दलद्वये पूर्वार्धापरार्धरूपे भागद्वये आर्य्यापरार्ध-तुल्ये आर्य्यायाः परार्धेन शेषार्धेन तुल्ये समाने सतीत्यर्थः। उपगीतिं तन्नामिकां आर्य्याम् आहुः कथयन्ति, कवय इति शेषः। उदाहरणम्—

नवगोपसुन्दरीणां रासोल्लासे मुरारातिम्।
अस्मारयदुपगीतः स्वर्गकुरङ्गीदृशां गीते॥

रासोल्लासे रासक्रीड़ाजनितमहोत्सवे नवगोपसुन्दरीणां नूतन

गोपरमणीनां तरुणीनां गोपाङ्गनानामिति यावत्। उपगीतिः गीतं मुरारातिं मुरारिं कृष्णमित्यर्थः। स्वर्गकुरङ्गीदृशां दिव्यललनानां अपसरसामित्याशयः, गीतेः गानस्य अस्मारयत् स्मारितवती। गोपीगीतिरप्सरोगीतितुल्येति भावः। 'गीतेः' अधीगर्थेत्यादिना कर्मणि षष्ठी ॥७॥

**आर्य्या सकलद्वितये विपरीते न पुनरिहोद्गीतिः ॥८**

आर्य्या सकलेति। आर्य्याखण्डद्वये व्यत्ययेन रचिते सत्युद्गीतिः स्यात्। पूर्वार्द्धे सप्तविंशतिमात्राः, परार्धे त्रिंशदित्यर्थः। उत्तरार्द्ध प्रकल्प्य-लक्ष्यं बोध्यम्। अर्थात् इह अस्मिन् छन्दो ग्रन्थे गीतिप्रस्तावे वा, आर्य्याशकलद्वितये आर्य्यायाः पूर्वार्धापरार्धरूपखण्डद्वये विपरीते विपर्य्यस्ते सति, पूर्वार्धे परार्द्धेन अपरार्द्धे च पूर्वार्द्धेन तुल्ये सतीत्यर्थः, उद्गीतिस्तन्नामिका आर्य्या कथयत इति शेषः। एतेनास्यां प्रथमार्द्धे सप्तविंशतिर्द्वितीयार्द्धे च त्रिंशदिति साकल्येन सप्तपञ्चाशन्मात्राः स्युरिति पर्य्यवसितम्। उदाहरणम्—

नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या।
अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः॥

नारायणेति। सततं निरन्तरं भक्त्या अनुरागेण नारायणस्य नारायण इति नाम्न इत्यर्थः, उद्गीतिः उच्चैर्गानम्, तथा संस्मृतिः सम्यक् स्मरणम्। किञ्च, अर्चायां पूजायाम् आसक्तिः अनुरागातिशयश्च, दुस्तरः दुखेन तरीतुं शक्यः यः संसारसागरः प्रपञ्चसमुद्रः, तस्मिन् तदुत्तरणनिमित्तमित्यर्थः, तरणिः नौका भवतीति शेषः। कृष्णसेवकः कदाचित् संसारसागरे न निमज्जतीति निर्गलितार्थः ॥८॥

**आर्य्या प्राग्दलमन्तेऽधिक-गुरु ताद्दृगपरार्धमार्य्यागीतिः ॥९**

नवार्य्या भेदाः ।

आर्य्या प्रागिति । यद्यार्या प्राग्दलमन्तेऽधिकगुरु स्यात्, अपरर्धमपि ताद्दृगेव भवेत्, तर्ह्यार्यागीतिः । आर्यादलद्वयमष्टाष्ट-गणाङ्कचतुःषष्टिमात्रं छन्दः । द्विः पाठात् पद्यपूर्त्तिः ।

इत्यार्य्या-प्रकरणं व्याख्यातम् ।

अर्थात् यदि आर्यायाः प्रागुक्तलक्षणाया आर्याजातेः प्राग्दलं पूर्वार्धम् अन्ते अवसाने अधिकः अतिरिक्तः गुरुः एको गगणो यस्य तत् तथोक्तम्, द्वात्रिंशन्मात्रिकमित्यर्थः । एवं परार्धं द्वितीयार्द्धमपि ताद्दृक् पूर्वार्द्धतुल्यम्, द्वात्रिंशन्मात्रिकमेवेत्यर्थः, स्यात्, तदा आर्या गीतिस्तन्नामकं छन्दो भवति । उदाहरणम्—

हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः ।
आर्या गीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम् ॥

हर्षाश्रुभिः—आनन्दजनितनयनजलैः स्तिमिताः आर्द्राः दृशो नयनानि येषां ते तादृशाः, तथा प्रमोदरोमाञ्च आनन्दजरोमोद्गमा एव कञ्चुका गात्रावरणविशेषाः, तैः अञ्चितः अलङ्कृतः देहः शरीरं येषां ते तथाभूताः, आर्या साधवः, भक्त्या अनुरागविशेषेण श्रीपते र्लक्ष्मीपतेः कृष्णस्येति यावत्, चरितसम्बद्धां चरित्रयुक्तां तद्विषयिणीमित्यर्थः, गीतिं सङ्गीतं गायन्ति कीर्त्तयन्ति ॥९॥

इत्यार्य्या ।

---

## अथ वैतालीयम्

**षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।**
**न समात्र पराश्रिता कला 'वैतालीये'ऽन्ते रलौ गुरुः ॥१**

अथ वैतालीय छन्दो दर्शयति—षड़िति। वैतालीये छन्दसि विषमे प्रथम-तृतीयरूपे पादे षट्कला षट्मात्राः स्युर्भयेयुः। समे द्वितीयचतुर्थरूपे पादेऽष्टौ कला स्युः। अन्ते षट्कलानामष्टकला-नाञ्चावसाने रलौ गुरुः रगण-लघुगुरवश्च स्युरित्यर्थः। अत्र विशेषनियममाह—समे पादे ता अष्टौ कला निरन्तरा नो स्युः, अव्यवहिताः केवललघवो न स्युः, किन्तु गुरुलघुमिश्रागुरुरूपा या स्युरिति यावत्। अत्र वैतालीये चतुर्षु पादेषु समा कला पराश्रिता न भवति, द्वितीय-चतुथादिरूपा कला तृतीय-पञ्चमादि रूपया कलया सह गुरु न कार्येत्यर्थः। विषमे तु यथारुचि बोध्यम् ॥१॥

मात्राछन्दः प्रकरणे वैतालीयं लक्षयति—षड़िति। यदि विषमे अयुग्मे, प्रथमे तृतीये च पादयोरित्यर्थः। षट् षट् संख्यकाः, तथा समे गुग्मे, द्वितीये चतुर्थे च पादयोरित्यर्थः, अष्टौ अष्ट-संख्यकाः कलाः मात्राः स्युः। अन्ते समपादोक्तानां विषम-पादोक्तानाञ्च कलानाम् अवसाने, परस्तादिति यावत्, रलौ रगण-लगणौ गुरुः एको गगणश्च स्यादिति शेषः। तदा वैतालीयं नाम छन्दो भवतीत्यर्थः। एतेन वैतालीये प्रथम-तृतीतयोश्चतुर्दश-मात्राः, द्वितीय-चतुर्थयोश्च षोड़शमात्राः स्युः, तत्र अन्तिमा अष्टौ मात्रा यथाक्रमं रगण-लगण-गगणैः कर्त्तव्या इति स्थूलतः पर्यवसितम्। समे विशेषमाह—ताश्चेति। वैतालीये छन्दसि समे युग्मे, द्वितीये चतुर्थे च पादयोरित्यर्थः। ताः प्रागुक्ताष्टौ कला इत्याशयः, पुनः निरन्तराः केवललघुकाः केवलगुरुका वेत्यर्थः।

न स्युः न भवेयुः। अत्र समे इत्युपादानाद् विषमे नोक्त नियमः। एवञ्च विषमे केवललघुभिः केवलगुरुभिर्वाक्षरैरपि निरुक्तसंख्यानां कलानां पूर्त्तिरनुमतेति प्राप्तम्। अत्र विषमपादोक्तासु षट्सु समपादोक्तासु चाष्टसु मात्रासु मध्ये इत्यर्थः। समायुग्मा द्वितीय-चतुर्थपादादिरूपा, कला मात्रा पराश्रिता परवर्त्तिनीं तृतीय-पञ्चम-सप्तमादिरूपां कलामित्यर्थः। आश्रिता प्राप्ता न भवतीति शेषः। विषमपादे द्वितीय-तृतीययोश्चतुर्थ-पञ्चम्योः षष्ठी-सप्तम्योश्च मात्रयोः समपादे च द्वितीययोश्चतुर्थपञ्चम्योः सप्तम्योऽष्टमी नवम्योश्च मात्रयोरेकैकेन गुरुणा प्रयोगे न कर्त्तव्य इति भावः। अत्रोक्तरूपेण भममात्रायाः पराश्रितत्वनिषेधाद्विषममात्रायाः पूर्वाश्रितत्वमतएव निषिद्धम् इति ज्ञेयम्। उदाहरणम्—

घुसृणेन मदेन चर्चितं तव यन्निन्दति राधिके कुचम्।
मुदमातनुतेऽत्र पाकिमं वै तालीयमिदं फलं हरेः॥

घुसृणेति। हे राधिके! यत् तालियं फलं तालफलं कर्त्तृ घुसृणेन 'कुङ्कुमं घुसृणम्' इत्यमरः, मदेन कस्तूरिकया च 'मदो रेरसिकस्तूर्याम्' इति मेदिनी, चर्चितं विलेपितं तव कुचं त्वदीय स्तनं निन्दति तिरस्करोति, अनुकरोतीत्याशयः। अत्र एतस्मिन् काले सम्प्रतीति यावत्, पाकोऽस्य जात इति पाकिमं परिपक्वं इदं तत्कालीयं फलं हरेः कृष्णस्य मुदम् आनन्दम् आतनुते विस्तारयति, करोतीति यावत्। वै इति पादपूरणे ॥१॥

**स्यातामन्ते रयौ गौ चेदौपच्छन्दसिकं तदाह वृत्तम् ॥२**

अथ वैतालीय-विशेषानाह—स्यातामिति। विषमे षट्कलाः, समे त्वष्टौ, ततो रगण-यगणौ चेद् भवतः, रगण-लघुगुरूणां स्थाने चेद् रगण-यगणौ स्यातां तदा आदौ छन्दसिकं वृत्तमाह पिङ्गलः। अर्थात् तत्रैवान्तेऽधिके गुरौ स्या'दौपच्छदसकं' कवीन्द्रहृदयम्।

द्विरावृत्त्या श्लोकः पूरणीयः। तत्रैव प्रागुक्तवैतालीयच्छन्दसि एव अन्ते सवसाने गुरौ एकस्मिन् गगणे अधिके अतिरिक्ते सति, औपच्छन्दस अयम् औपच्छन्दसकं तन्नामकं कवीन्द्रहृदयं काव्यरचयितृ मनोहरं छन्दः स्यात्। ग्रन्थेऽस्मिन् द्विविधं वैतालीयम्, ग्रन्थान्तरेषु तु तदनेकविधमिति द्रष्टव्यम्। उदाहरणम्—

आतन्वानं सुरारिकान्तास्वौपच्छन्दसकं हृदो विनोदम्।
कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं दधानम्॥

(इति वैतालीयम्)

आतन्वानमिति—यो देवः कृष्ण इत्याशयः, सुराणाम् अरयः सुरारयो दानवाः, तेषां कान्तासु प्रियासु हृदो हृदयम्, उपच्छन्दस अयम् औपच्छन्दसः, अर्हणादिषु पाठादुपच्छन्दः शब्दाच्चातुरर्थिको वुञ् प्रत्ययः। तम् अभिप्रायानुरूपमित्यर्थः। विनोदम्–आनन्दम् आतन्वानं कुर्वाणं कंसं तन्नामकदैत्यविशेषं निर्जघान विनाशितवान्, जगतां लोकत्रयस्यस्थितिं पालनं दधानं धारयन्तं कुर्वन्तमित्यर्थः। तं प्रसिद्धं देवं वन्दे प्रणमामि, अहमिति शेषः॥२॥

**आपातलिका कथितेतं भाद् गुरुकावथ पूर्ववदन्यत् ॥३**

आपातलिकेति। विषमे षट्कलाः, समे त्वष्टौ, ततो यदि भगणौ गुरुयुग्मं च भवेत्, अन्यत् सर्वं पूर्ववत्, तदापातलिका छन्दः॥३॥

**तृतीययुग् दक्षिणान्तिका समस्तपादेषु द्वितीय-लः ॥४**

तृतीयेति। वैतालीयादीनां छन्दसां चतुर्षु पादेषु यदि द्वितीय ल स्तृतीययुक् भवति, प्रथमाल्लघोः परो गुरुर्भवति, तदा दक्षिणान्तिका छन्दः। इमं छन्दो भेदमारभ्याग्रे न समात्र पराश्रिता कले'त्यस्यापवादः। ... वैतालीय-दक्षिणान्तिका,

औपच्छन्दसिक-दक्षिणान्तिका, आपातलिका-दक्षिणान्तिका चेति त्रिभेदं तद् बोध्यम्। लक्ष्याणि कल्प्यानि ॥४॥

**उदीच्यवृत्तिर्द्वितीय-लः सक्तोऽग्रेण भवेदयुग्मयोः ॥५**

उदीच्येति। अयुग्मयोर्विषमपादयोर्द्वितीयलघुश्चेदग्रेण तृतीयेण युक्तो भवति, तदोदीच्यवृत्तिर्नाम छन्दः। समयोस्तु वैतालीयादिवत्। वैतालीयोदीच्यवृत्तिः, औपच्छन्दसिकोदीच्यवृत्तिः, आपातलिकोदीच्यवृत्तिश्चेति त्रिविधमिदं बोध्यम्। लक्ष्यानि कल्प्यानि ॥५॥

**पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेह युग्मयोः ॥६**

पूर्वेति। युग्मयोः समपादयोः पूर्वेण चतुर्थेन लघुना यदि पञ्चमो लघुर्युक्तः स्यात्, मात्रात्रयात् परश्चेद् गुरुः स्यादित्यर्थः, तदा प्राच्यवृत्तिः। छन्दसि विषमोस्तु वैतालीयादिवत्। वैतालीय-प्राच्यवृत्तिः, औपच्छन्दसिक-प्राच्यवृत्तिः, आपातलिका-प्राच्यवृत्तिश्चेति त्रिभेदं तद्बोध्यम्। लक्ष्याणि कल्प्यानि ॥६॥

**यदा समावोज-युग्मकौ पूर्वयोर्भवति तत् प्रवृत्तकम् ॥७**

यदा समेति। ओज युग्मकौ विषमसमौ पादौ पूर्वयोरुदीच्य वृत्तिप्राच्यवृत्त्योः समौ तुल्ललक्षणौ स्यासां, विषमे पादे द्वितीयाग्रेण युतः, समे पादे चतुर्थो लघुः पञ्चमेन युतः स्यादित्यर्थः, तदा प्रवृत्तक छन्दः। वैताकीयप्रवृत्तकमौपच्छन्दसिकप्रवृत्तमापातलिक-प्रवृत्तकञ्चेति त्रिभेदं तद्बोध्यम्। लक्ष्याण्यूह्यानि ॥७॥

**अस्य युग्म-रचिताऽपरान्तिका ॥८**

अस्येति। अस्य प्रवृत्तकस्य युग्मैः समपादैः रचिता अपरान्तिका भवेत्। त्रिविधैषा बोध्या—वैतालीयप्रवर्त्तकापरान्तिका,

आपातलिका-प्रवर्त्तकापरान्तिका चेति ॥८॥

**अयुग्मजा चारुहासिनी ॥९ नववैतालीय भेदाः ॥**

**इति छन्दः कौस्तुभे मात्राच्छन्दस्यार्य्या-वैतालीयनिर्णयः**

**षष्ठी प्रभा ॥६॥**

अयुगिति। अस्य इत्यनुवर्त्तनीयम्। प्रवर्त्तकस्यायुग् भवा विषमपादजाता चारुहासिनी भवेत्। त्रिविधैवेयम्—वैतालीय-प्रवर्त्तक-चारुहासिनीत्यादिभेदात् ॥९॥

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये**

**वैतालीय-प्रकरण-व्याख्यानं षष्ठी प्रभा ॥६॥**

---



# सप्तमी प्रभा



### अथ पज्झटिका

**प्रतिपदयमकितषोड़शमात्रा नवमगुरुत्व विभूषितगात्रा ।**
**पज्झटिका पुनरत्र विवेकः क्वापि न मध्यगुरुर्गण एकः ॥ १**

अथ सङ्कीर्णानि मात्रावृत्तानि दर्शयति—प्रतिपदेति। यत्र प्रतिपादं षोड़शमात्राः स्युः, तासु नवमी मात्रा दशम्या सह गुरुरूपा भवति, यत्र मध्यगुरुगणो न स्यात्, तत् पज्झटिका छन्दः इत्यर्थः। नवमगुरुत्वं क्वचिद् व्यभिचरति। इमाः षोड़शमात्रा समादिपादेष्वधिक्रियन्ते यावत् पादाकुलकमिति बोध्यम्।

अर्थात् या पदे पदे प्रतिपदं प्रतिपादमित्यर्थः, यमकिताः सञ्जातयमकाः, एकजातीयस्वरव्यञ्जनसमुदायस्य आवृत्तिरूपयमक-युक्ता इत्यर्थः। यद्वा, यमकिता युग्मविच्छिन्नाः, षोड़श तत् संख्यका मात्रा यस्यास्तादृशी, तथा नवमस्य नवममात्रयाः गुरुत्वेन दीर्घत्वेन विभूषितं शोभितं गात्रम् अवयवो यस्यास्तथोक्ता, सा पज्झटिका तन्नामकं छन्दो भवति। अत्र इह पज्झटिकायां विवेकः वक्ष्यमानरूपं विवेचनं कर्त्तव्य इति शेषः। विवेचनीय-मेवाऽऽह—क्वापीति। अत्र क्वापि कुत्रापि एकोऽपि मध्यो मध्यवर्णः गुरुर्दीर्घो यत्र तथोक्तः गणः, जगण इत्याशयः। न स्यादिति शेषः। पज्झटिकायां जगणरहितं चतुष्कलगणचतुष्टयं नवम-मात्रायाश्च गुरुत्वं भवेदिति भावः। अत्र नवमगुरुत्वस्य शोभावहत्व कथनात् तस्य न लक्षणघटकत्वनियमः, परं शोभाविधायकत्वमेवेति सूचितम्। एतत्त्वग्रिमोदाहरणे एव स्फुटी

भविष्यति। अत्र विषममात्राया गुरुत्वे समे छेदः कर्त्तव्य इति केषाञ्चिन्मतम्। ग्रन्थकर्त्तृमते उक्त लक्षणं पज्झटिकाच्छन्दः। नारायणभट्टस्तु—"प्रतिपादं चत्वारश्चतुष्कलागणाः, तत्रान्तिमो जगण एव, एवं चतुर्भिः पादैश्चतुःषष्टिमात्रं पज्झटिकाच्छन्दः" इत्युक्तम्। एवञ्च गङ्गादासमते जगणस्य सर्वथा निषेधः, नारायणभट्टमते च विधेयतानियम इति महदन्तरमुभयोः समुपस्थितम्। तदत्र कतरः पक्षः साधीयानिति निर्णये छन्दोविद् एव प्रमाणम्। उदाहरणम्—

तरलवतंसाश्लिष्टस्कन्धश्चञ्चलतरपज्झटिका कटिबन्धः।
मौलिचपलशिखिचन्द्रकवृन्दः कालियशिरसि ननर्त्त मुकुन्दः॥

तरलेति। तरलश्चञ्चलः यो वतंसः कर्णभूषणम्, तेन आश्लिष्टः स्पृष्टः स्कन्धः अंशदेशो यस्य तादृशः तथा चलतरा नृत्यवेगेन अति चञ्चला पज्झटिका क्षुद्रघण्टिका कटिबन्धे कटिबन्धन सूत्रे यस्य स तथोक्तः। किञ्च, मौलौ मस्तके चपलं चञ्चलं शिखिचन्द्रकवृन्दं मयूरपिच्छवर्त्तिवर्हसमूहो यस्य तथाभूतः मुकुन्दः कृष्णः कालियस्य तन्नामकसर्पविशेषस्य शिरसि मस्तके तदुपरीत्यर्थः। ननर्त्त नृत्यं चकार।

**नवमगुरुत्वं व्यभिचरति च।**

यथा—'रणधरणीजितरजनिविहारी'ति।

रणधरण्यां संग्रामभूमौ जितः विजितः रजनिविहारी निशाचरः, राक्षस इति यावत्, येन सः। अत्र नवममात्रारूपस्य 'रजनी'ति रकारस्य लघुत्वम्॥१॥

**मात्रासमकं नवमो लान्तम्॥२**

तान्येवाह—मात्रेति। षोड़शभिर्मात्राभिरिह चतुःकला

श्चत्वारो गणा बोध्या, तेषु नवमीमात्रालघुश्च भवति, तर्हि मात्रा समकं छन्दः। तच्च गन्तं गुर्वन्तं बोध्यम् ॥२॥

**जो न्लावथाम्बुधेर्विश्लोकः ॥३**

जोन्लाविति। यस्य पादेष्वम्बुधेर्मात्रा-चतुष्टयात् परो जगणः स्यादथवा न्लौ चतुर्लघुगणः स्यात्, स विश्लोको नामेत्यर्थः। द्वितीयं लक्ष्यं कल्प्यम्। ध्येयो मधुरिपुरात्मसुखार्थमिति ॥३॥

**तद्युगलाद् वानवासिका स्यात् ॥४**

तद्युगलादिति। तद्युगलादम्बुधिद्वयान् मात्राष्टकादित्यर्थः, यदि जो न्लौ वाभवति, तदा वानवासिका छन्दः। द्वितीयं कल्पनीयम्। लोकहितार्था गिरिधरमूर्त्तिरिति ॥४॥

**वाणाष्ट-नवसु यदि लश्चित्रा ॥५**

अष्टमो नवमश्च लघुः स्यात्तदा चित्रा छन्दः ॥५॥

**नवमे भवति गुरावुपचित्रा ॥६**

नवमे भवतीति। नवमीमात्रा यदि दशम्या सह संयुज्य गुरुः स्यात्, तदोपचित्रा छन्दः ॥६॥

**अष्टाभ्यो भाद् गावुपचित्रा ॥७**

भेदान्तरमाह—अष्टाभ्य इति। यदि मात्राष्टकाद् भगणो गुरुद्वयश्च स्यात्, तदोपचित्रा छन्दः ॥७॥

**यदतीतकृतविविध-लक्ष्मयुतैर्मात्रासमादिपादैः कलितं। अनियतवृत्त-परिमाण-सहितं सहितं प्रथितं जगत्सु पादाकुलकम् ॥८**

**अष्टौ पज्झटिकादिभेदाः ॥**

---

यदतीतेत्यादि। यदतीतैः प्रागुक्तैः कृतैर्विविधैर्लक्ष्मभिर्युतैः पूर्वोक्तैर्मात्रासमादीनां पदैः कलितं निर्मितं जगत्सु पादाकुलकं छन्दः प्रथितं ख्यातं, तत् कीदृगित्याह—अनियतेति। नियतैकलक्षणहीनं द्विकत्रिकचतुष्क-संयोगाद् बहुविधं तदित्यर्थः। परिमाण-सहितं षोड़शकलपादत्वेन युक्तं, विशेषणयोः कर्मधारयः। तत्र द्विकसंयोगे मात्रासमकस्य पादभयं विश्लोकस्यैकः पादः त्रिकसंयोगे मात्रासमकस्य पादद्वयं विश्लोकस्यैकपादः, बनवासिकादीनां तिसृणामन्यतमस्यैक इति। चतुष्कसंयोगे तु सूत्रमेवोदाहरणं बोध्यम्। मात्रात्मक—विश्लोकवानवासिकोपचित्राणां पादैर्निमितत्वात् ॥८॥ मात्रासमादिप्रकरणं व्याख्यातम् ॥

**छन्दो मञ्जर्यामत्र विशेषः—**

**मात्रात्रयोदशकं यदि पूर्णं लघुकविराम।**
**पश्चादेकादशकन्तु 'दोहडिका' द्विगुणेन ॥**

**(अपभ्रंशभाषायां प्रकारः)**

**राई-दोहडिपठण सुणि हसिअ काणु गोआल।**
**विन्दावनघनकुञ्जघरचलिओ कमण रसाल ॥**

दोहडिकां नाम मात्राच्छन्दो निरूपयति—मात्रेति। यदि चेत् पूर्वं प्रथमपादे लघुकविरामि लघुकेन एकेन लघ्वक्षरेण विरमितुं शीलं यस्य तादृशं मात्रात्रयोदशकं त्रयोदशमात्रा इत्यर्थः, भवति, पश्चात् द्वितीयपादे इत्यर्थः। अत्रापि लघुकविरामीत्यनुषञ्जनीयम्। लघुकविरामि एकादशकम् एकादशमात्रा भवतीति शेषः। तदा द्विगुणेन द्विरावृत्त्या उक्तरूप-पादद्वयस्य यथाक्रमं पुनः पठनेनेत्यर्थः, दोहडिका तन्नामकं छन्दो भवति। यस्याः प्रथमपादे त्रयोदश द्वितीये चैकादशमात्रा भवेयुः,

प्रतिपाद्यश्च निरुक्तमात्राणामन्तिममात्राया एकेन लघ्वक्षरेण निर्वाहः स्यात्, तृतीय-चतुर्थौ च पादौ प्रथम-द्वितीयवत् स्यातास्, सा दोहडिका छन्द इति भावः। अस्या 'दोहे'ति ग्रन्थान्तरसम्मतं नाम।

दोहडिका व्यवहारं प्रदर्शयितुमाह—अपभ्रंशेति। अपभ्रंश भाषायाम् आभीरादिभाषायां संस्कृतव्यतिरिक्तभाषायां वा प्रचारो व्यवहारः, अस्या इति शेषः। अपभ्रंशभाषालक्षणं यथा—
आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृतः।

शास्त्रेषु संस्कृतादव्यदपभ्रंशतयोदितम्। इदानीमुदाहरणेन स्वोक्तिं द्रढ़यति—राइ इति।

राधिका दोहडिकापठनं श्रुत्वा हसित्वा कृष्णो गोपालः।
वृन्दावनघनकुञ्जगृहं चलितः कमनो रसालः॥ इति संस्कृतम्।

अस्यार्थः—रसालः अतिशयरसिकः, अतएव कमनः कामुकः, 'कमनः कामुके कामेऽभिरूपेऽशोकपादपे' इति मेदिनी। गोपालः गोपालकः कृष्णः राधिकाया राधाया दोहडिकाया गोपरमणीनां गीतिविशेषस्य पठनं पाठं श्रुत्वा आकर्ण्य, हसित्वा विहस्य वृन्दावनवनघनकुञ्जगृहं वृन्दारण्यस्थितनिविड़लतानिर्मितमण्डपं चलितः गत इति।

**अथ रोलादिच्छन्दांसि।**

**प्रतिचरणं रसगुणितजलधि (२४) कलिका-परिखचितम्।**
**रोला नामकवृत्तमिदं फलनायक-रचितम्।**
**एकाधिकदशविरति-युतं जनहृदयाहरणं।**
**मृदुलपदावलि-ललितमखिल-कवि-कण्ठाभरणम्॥१**

अथ रोलादि छन्दांसि दर्शयति—प्रतिचरणमिति। यदि चत्वारः पादाश्चतुर्विंशतिमात्रानिर्मिता भवन्ति, तेष्वेकादशमात्रायां यतिः स्यात्तदा रोला छन्दः। षण्णवतिमात्रमेतत्। केचिदिदं काव्यं वदन्ति स्फुटमन्यत् ॥१॥

**त्र्यधिकादशविरचय कला मुहुरेकादशधाम।**
**इति दलयुग्मयुतं कलयवृत्तं द्विपथा नाम ॥२ दोहेत्यन्ये।**

त्र्यधिकेति। यस्य त्रयोदशभिरेकादशभिश्च कलाभिः पूर्वार्धं, तथोत्तरार्धं च, तद् द्विपथा छन्दः। दोहेत्यन्ते। यथा—

'चरण-सरोरुहमस्तु हृदि मद्वचने तव नाम।
चक्षुषि रूपं यावदसु रमय मनो मम राम॥'२॥

**एकादश कुरु तात पुनरिह शिखिदश (१३) तनुकलाः।**
**सोरठेति सुजातमुपनयवृत्तमुदाररुचि ॥३**

एकादशेति। हे तातेति सम्बोधनं। शिखिदशेति—शिखिनो वह्नयस्ते च त्रय एवाह्वनीयादयः, तेन त्रयोदशेत्यर्थः। तनु विस्तारय। सुजातं कोमलं उपनय जानीहि। द्विपथाद्विपरीता सती सोरठच्छन्दो भवेदित्यर्थः ॥३॥

**कुरुसप्तचतुष्कलमतिशय-निर्मलमन्ते गुरुमुपनीतम्।**
**जगतीह चतुष्पद नाम सुशर्मदमहिपतिना परिगीतम् ॥**
**त्रिंशत्कलपीनं जगणविहीनं दिग्वसुरवि-सविरामम्।**
**बुध-संसदि पठितं नवरसघटितं वितरति कवये कामम् ॥४**

कुरु सप्तेति। यस्य चत्वारोऽपि पादा त्रिंशन्मात्रा-विरचिताः स्युस्तेषु दशभिरष्टभिर्द्वादशभिश्च यतिः स्याच्चतुष्पदं

छन्द इति। स्फुटमन्यत्। विंशत्यधिकमात्रमिदं छन्दः ॥४॥

षट्पदनामकवृत्तमिदं फणिमणिरनु गायति।
सचतुर्विंशतिरत्र कला लसदैकादश यति ॥
ईदृशचरणचतुष्कमुपाहित कविकुलमोदं।
रसिक-सभाजन-चित्तहरं परिशमित-विनोदम् ॥
अन्त्याङ्घ्रियुगलमत्र चकास्ति वस्तुविंशति-कलिकाचितम्।
कुरु पञ्चदशे विरति श्रितं श्रवणादपि विदुषां हितम् ॥५

षट्पदेति। यदि चत्वारः पादाश्चतुर्विंशतिमात्रा भवन्ति, तेष्वेकादश्यां मात्रायां यतिः, चतुर्णां पादानामन्ते द्वौ पादावष्टाविंशतिमात्रारचितौ स्यातां, तयोः पञ्चदश्यां मात्रायां यति र्भवति, तर्हि षट्पद नामकं छन्दः स्यात्। स्फुटमन्यत्। द्विपञ्चाशदधिकशतमात्रमिदम् ॥५॥

कुण्डलिका सा भण्यते प्रथमम्।
द्विपथा यत्र रोला चरण-चतुष्टयम् ॥
विलसति विशदं तत्र पदावलिरति मृदु यमिका।
अष्टपदी या यजति निखिलजन-सम्मदगमिका ॥
अष्टपदी या भजति विबुध-सुमनो मण्डलिका।
लाटानुप्रासधरा च रसिककर्णे कुण्डलिका ॥६

कुण्डलिकेति। सा कुण्डलिका भण्यते तदाख्य छन्दः कथ्यते, इत्यर्थः। का सेत्याह—यत्र प्रथमं द्विपथा स्यात्, तदुत्तरं रोला-चरणचतुष्टयञ्च। इत्थं याष्टपदी सती वसति वर्त्तते, या

विबुध-सुमनः पण्डितसुचित्रं भजति, या कीदृशीत्याह—अष्टपदीयेति। अष्टभिः पद्भिश्चरणैः शोभां याति प्राप्नोति तथा। पुनः कीदृशीत्याह—मण्डलिकेति। मण्डलिका मण्डलाकारा, आवृत्त्या पाठात्। पुनः कीदृशीत्याह—लाटेति। लाटानुप्रासवतीत्यर्थः। पुनः कीदृशीत्याह—रसिकेति। रसिकानां कर्णकुण्डलरूप, तैरति-प्रीत्या श्रोतव्या इत्यर्थः। अष्टपदीयेत्यादौ यमकं, अर्थभेदसत्त्वात्। अर्थे सत्यर्थेभिन्नानां वर्णानां या पुनः श्रुतिः, यमकं पाद तद्भाग-वत्ति तद् यात्यनेकतामिति तल्लक्षणात्। विलसति विशदं तथेत्यादौ लाटानुप्रासः, सम्बन्धिभेदेन तात्पर्य्यमात्रभेदात् 'शाब्दस्तु लाटानुप्रासो भेदे तात्पर्य्यमात्रत' इति तल्लक्षणात् ॥६॥

**रसनिहत-दशक-परिमित-कलमधिकयुगलकलमिह भवति।**

**शिखामुनिहत-युगलघुसकलमिषु हतरसलघु परमपि**

**गुरुयुतमुभयतः ॥७**

रसेति। रसैः षड्भिर्निहितं गुणितं यद्दशकं तत् परिमिताः कला मात्रा यस्यां तद् यथा स्यात्तथेति। इह जगति शिखा छन्दो भवति। रसनिहतदशकेति षष्टिः कलाः अधिकयुगलेति द्वे कले, इत्थञ्च द्वाषष्टिमात्रं शिखा छन्दः। इत्थं मात्रासंख्या-मुक्त्वा वर्ण-स्वरूपमाह—मुनीत्यादि। मुनिभिः सप्तभिर्हतानि गुणितानि युगानि चत्वारः अष्टाविंशतिरित्यर्थः। तत् परिमिता लघवो यस्मिंस्तत्। ईदृक् पूर्वं सकलं, इषु-हतरसलघु इषुभिः पञ्चभिर्हता रसास्त्रिंशदित्यर्थः। तत् परिमिता लघवो यत्र तादृक् उत्तरदलमित्यर्थः। उभयत्र उभयं गुरुयुतं सकलद्वयमपि प्रान्तेन गुरुणा युतमित्यर्थः। प्रथमे दलेऽष्टाविंशतिर्लघवः। प्रान्ते गुरुर्द्वितये तु त्रिंशल्लघवः प्रान्ते गुरुरिति ॥७॥

**यस्याः पूर्वार्द्धेऽष्टौ द्विर्गाः प्रोक्ता साऽनङ्गक्रीड़ाख्या ।**
**युग-निहतवसु-लघुकृतमपरदलमथ युग-हतषड़धिक-**
**दशकलमिह ॥८**

यस्या इति। यस्यः पूर्वार्धे द्विः पठिता अष्टौ गाः गुरवः षोड़शगुरवो भवन्ति, यस्याः अपरदलमुत्तरार्द्धः युगनिहत-वसुलघुकृतं युगैश्चतुर्भिर्निहता गुणिता वसवोऽष्टौ द्वात्रिंशदित्यर्थः। तत्संख्यकैर्लघुभिः कृतं निर्मितं भवति, साऽनङ्गक्रीड़ा प्रोक्ता। पूर्वदले षोड़शगुरवः, परदले तु द्वात्रिंशल्लघवः इत्यर्थः। मात्रावृत्तत्व सम्पादनायाह—अथ युगेति। युगैश्चतुर्भिर्हता गुणिता ये षड़धिका दश-षोड़श तत्संख्यकाः कला यस्यां प्रवचन-क्रियायां तद् यथा स्यात्तथेति चतुःषष्टिमात्रं छन्दः ॥८॥

**प्रथममिषु निहत-रसलघुगुरुकृतमपरमपि**
**दलमतिसुललितपदम् ।**
**गुणहत-नवलघुगुरुयुगलमिह रस-हत-**
**दशगुणकलमिति खञ्ज ॥९**

प्रथममिति। यदि प्रथमदलं इषुनिहतरसलघुगुरुकृतं स्यात्, त्रिंशल्लघुभिर्गुरुणा चैकेन भवेत्, अपरं च द्वितीयदलं गुणहित-नवलघुगुरुयुगलकृतं गुणैस्त्रिभिर्हता गुणिता नवसप्तविंशतिरित्यर्थः। तत्संख्यकैः लघुभिर्गुरुयुग्मेन च कृतं स्यात्, तर्हि खञ्जा छन्दः। वर्णवृत्तत्वनिवृत्तये प्राह—रसहतेति। त्रिषष्टिमात्रं खञ्जा छन्दः इत्यर्थः ॥९॥

**सप्तचतुष्कल-गणकृतदलयुगमन्त्य निवेशित-गुरु-मधुरा ।**
**न रचय जगणमिहेति फणीश्वर-गदितमिदं वृत्तं रुचिरा ॥१०**

सप्तेति। यत्र पूर्वदले त्रिशन्मात्रास्तथोत्तरदले च, तद् रुचिरा छन्दः इत्यर्थः। अन्त्यगुरु जगण-वर्जितं चेति षष्टिमात्रमेतत् ॥१०॥

**पञ्चाधिकदशघटय कला मुखगौरवाः।**
**धेहि ततो जगणश्च गुरुश्च सुसौरभाः ॥**
**एवञ्चरणचतुष्कमाह कविदत्तके।**
**पिङ्गलमुनिरिह सुमुखिप्रवङ्गमवृत्तके ॥११**

पञ्चाधिकेति। यस्य प्रतिपादमेकविंशतिमात्रा भवन्ति, पादानामादिवर्णो गुरुः स्यात्, तत् प्रवङ्गमः छन्दः। चतुरशीति मात्रमेतत्। 'सुमुखि' इत्यर्थ'खि'-वर्णस्य गुरुत्वं न मन्तव्यम्। 'ह्वे प्रे' पूर्वस्य गौर्वैकल्प्यात्। सुसौरभा इति कलाविशेषणं, शोभना सौरी सूर्य्योत्पन्ना भा द्युतिर्यासां ताः, अतिरम्या इति भावः। कवीति कविभ्यो दत्तं कं सुखं येन तस्मिन् ॥११॥

**षोड़शकलचरणं भुवि संप्रति मोद-विवर्द्धकमखिलजनं प्रति।**
**शेष-यमकलघुयुगलमनोहरमखिलनाम किल वृत्तमुदाहर ॥१२**

षोड़शेति। अखिल नाम वृत्तं प्रत्युदाहर कथय मित्रेति शेषः। कीदृशं तदित्याह—षोड़शसंख्याः कला येषु तादृशाश्चत्वारो यस्मिन् तत्। पुनः तीदृशमित्याह—शेषपादान्तयमकं-रूपं यल्लघु-युगलं तेन मनोहरं रम्यं चतुःषष्टिमात्रमेतत् छन्दः ॥१२॥

**स चतुर्विंशतिसंख्यकलमिषु-कलिका-कलितश्च दलं ननु।**
**ईदृश दलयुगलेन खलु चुलियालेति वृत्तमिदं सखिषु ॥१३**

स चतुरिति। यस्य प्रथमे दले चतुर्विंशति-मात्राः

पञ्चमात्राश्च भवन्त्येवं द्वितीयेऽपि दले ताः स्युस्तत् चुलियाला छन्दः। अष्टपञ्चाशन्मात्रमेतत् ॥१३॥

**द्वात्रिंशत्कलिका यस्यां प्रतिपादं प्रकीर्त्तिताः।**

**सा स्यात् त्रिभङ्गीविच्छिन्ना दशाष्टकरसाष्टकैः ॥१४**

अथ त्रिभङ्गीवृत्तस्य लक्षणमाह—द्वात्रिंशदिति। दशभिरष्टभिः षड्भिरष्टभिश्च प्रतिपादं यस्या यतिः, सा त्रिभङ्गीत्यर्थः। अष्टाविंशत्यधिकैकशतमात्रमिदं छन्दः ॥१४॥

**दुर्मिलेत्युदिना सा चेद् दशाष्टभुवनैर्यतिः ॥१५**

**(लक्ष्ये कल्प्ये। पञ्चदश रोलादीनि)**

**इति छन्दः कौस्तुभे मात्राछन्दसि पज्झटिकादिसङ्कीर्णं वृत्तनिरूपणं सप्तमी प्रभा ॥७॥**

दशाष्टेति। यदि त्रिभङ्ग्यामेव दशभिरष्टभिश्चतुर्दशभिश्च प्रतिपादं यतिः स्यात्तदा सैव दुर्मिला भवतीत्यर्थः। लक्ष्ये कल्प्ये इति। अत्र त्रिभङ्गी यथा—

श्रुतिरत्र विभूषणरुचिजितभूषणमलिदूषणनयनान्तगतिं,
यमुनातट-तल्पितपुष्पमनल्पितमदजल्पितदयिताप्तरतिम्।
वन्देमहि वन्दितममन्दितकुलमर्दितखलकंसमतिं,
त्वामिहि दामोदर-हलधर-सोदरहर नो दरमनुबद्धरतिम्॥

दशाष्टचतुर्दशकल्पिता चेद् यतिः स्यात्तदेयमेव दुर्मिला बोध्य ॥१५॥

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये सप्तमी प्रभा ॥७॥**

# अष्टमी प्रभा



**प्रस्तारोद्दिष्ट-नष्टानि तथा मेरुपताकिके ।**
**मर्कटी चेति षट् प्राहुः प्रत्ययान् वर्णमात्रयोः ॥१**

अथोक्तानां छन्दसां प्रत्ययार्थं प्रस्तारादिकं दर्शनीयम्। अतस्तद्दर्शयति—प्रस्तारेति। तत्र वर्णच्छन्दसां प्राथमिकत्वात्तेषां तत्पूर्वं वाच्यमिति व्यञ्जयति वर्णमात्रयोरिति ॥१॥

**सर्वगुर्वादिमं वृत्तं सर्वलघ्वन्तिमं भवेत् ॥२**

जातीनां प्रस्तारेषु कृतेषु प्रथमं छन्दः सर्वगुरुवर्णं दृष्टम्, अन्तिमं तु सर्वलघुवर्णमित्याह—सर्वेति ॥२॥

**तत्र वर्णप्रस्तारः—**

**पादे सर्वगुरौ गुरोः प्रथमतः कुर्य्यादधस्ताल्लघुं**
**शेषन्तूर्द्ध्वसमानकं विरचयेदूने गुरूनर्पयेत् ।**
**पादः सर्वलघुर्न यावदुदियात्तावद्विदध्यादिदं ।**
**प्रस्तारः खलु वर्णवृत्तनिपुणैरेष स्मृतः पण्डितैः ।**
**अर्धमर्द्धसमे पादौ विषमे कृत्स्नमेव सः ॥३**

तत्र वर्णप्रस्तारलक्षणमाह—पादे इति। आदौ सर्वगुरुः पादः स्थाप्यः, सर्वगुर्वादिमं वृत्तमित्युक्तेः। यस्मिन् सर्वगुरौ पादे स्थापिते सति तत् प्रथमस्य गुरोरधस्तात् लघुं कुर्य्यात् विलिखेत्। शेषं सर्वमूर्द्ध्वसमादकं विलिखेत्। ऊर्द्ध्वं उपरिष्टात् यो वर्णाः गुरुरूपा गुरुलघुरूपा वा स्युस्ते सर्वे यथावत्तदधो लेख्या

इत्यर्थः। इमं विधिं पुनः पुनः कुर्य्यात्। तत्र द्वितीयतृतीयादिके कृत्ये क्रियमाणे सति ऊर्द्ध्वस्थितादाद्यात् गुरोरधस्तल्लघुर्लेख्यः। शेषं तु सर्वमूर्द्ध्ववत् कुर्य्यात्। अथ गुर्वधोलिखिताल्लघोः पूर्वमूने स्थाने गुरूनर्पयेत् विलिखित्—इति व्यक्त्यापेक्ष्यं बहुवचनं गुरुं गुरू गुरुन् वेत्यर्थः। इदं कृत्यं तावद् विदध्यात् कुर्य्यात् यावत् स सर्वगुरुः पादः सर्वलघुः सन्न उदियात् न दृश्येतेत्यर्थः। एष खलु वर्णवृत्तनिपुणैः पण्डितैः प्रस्तारः स्मृतः, वर्णप्रस्तारोऽयमित्यर्थः। प्रस्तारो विस्तार इत्यर्थः। एषा समवृत्तानां प्रस्तार-कल्पना। अर्धसमवृत्तानां तु अर्धस्य पादकल्पना कार्य्या शेषं पूर्ववत्, यदुक्तं "अर्धसमस्य प्रस्तारे अर्धस्य प्रस्तारः कार्य्य" इति। विषमाणां तु प्रस्तारे छन्दसः पादकल्पना कार्य्या, यदुक्तं—"विषमप्रस्तारे पादचतुष्टयस्य प्रस्तारः कार्य्य" इति। इत्थं त्रिविधानां छन्दसां प्रस्तारो बोध्यः ॥३॥

एकवर्णप्रस्तारः—
ऽ (१)
। (२)

द्विवर्णप्रस्तारः—
ऽऽ (१)
।ऽ (२)
ऽ। (३)
।। (४)

त्रिवर्णप्रस्तारः—
ऽऽऽ (१)
।ऽऽ (२)
ऽ।ऽ (३)
।।ऽ (४)
ऽऽ। (५)
।ऽ। (६)
ऽ।। (७)
।।। (८)

चतुर्वर्णप्रस्तारः—
ऽऽऽऽ (१)
।ऽऽऽ (२)
ऽ।ऽऽ (३)
।।ऽऽ (४)
ऽऽ।ऽ (५)
।ऽ।ऽ (६)
ऽ।।ऽ (७)
।।।ऽ (८)
ऽऽऽ। (९)
।ऽऽ। (१०)

ऽ।ऽ। (११) ।ऽ।। (१४)
।।ऽ। (१२) ऽ।।। (१५)
ऽऽ।। (१३) ।।।। (१६)

अथ वर्णोद्दिष्टम्—

वृत्तवर्ण-शिरस्थङ्कान् विलिख्य द्विगणं क्रमात् ।
एकं संयोज्य लघ्वङ्कैः सहोद्दिष्टं विभावयेत् ।
स्वरूपं वीक्ष्य वृत्तस्य तत्संख्याधीरितः फलम् ।।४

अथ प्रस्तारोपयोगि उद्दिष्टमाह—वृत्तवर्णेति । वृत्तस्य परिदृश्यमाणस्य छन्दसो ये लघुगुरुरूपा वर्णास्तेषां शिरसि प्रथमात् द्विगुणक्रमादङ्कान् विलिख्य स्थानद्विगुणानङ्कान् विन्यस्येत्यर्थः। तेषु ये लघ्वङ्का लघुवर्णशिरस्था अङ्कास्तैः सहैकमङ्कं संयोज्य मिश्रितं कृत्वा उद्दिष्टं विभावयेत। किं संख्याकमिदं छन्द इति विचिन्तयेदित्यर्थः। यथा त्र्यक्षरे छन्दसि प्रथमं गुरुद्वयं ततः एकं लघु १ २ ४ / ऽ ऽ । इदृक् वृत्तं वीक्ष्य प्रथमाक्षरे एकैकः द्वितीये द्विकः तृतीये चतुष्कः स लघोरुपर्य्यङ्कश्चतुष्करूपः एकेन मिश्रितः पञ्चमं वृत्तमिदमिति ज्ञापयति। यथा चतुरक्षरे छन्दसि प्रथमं गुरुद्वयं ततो लघु स्ततो गुरु १ २ ४ ८ / ऽ ऽ । ऽ ईदृक् वृत्तं वीक्ष्य प्रथमं एककः द्वितीये द्विकः तृतीये चतुष्कः चतुर्थेत्वष्टकोऽङ्को लेख्यः। चतुरङ्क एकेन युक्तः पञ्चमं वृत्तमिदमिति ज्ञापयति। इत्युद्दिष्टविधिः। उद्दिष्टफलमाह—स्वरूपमिति। वृत्तस्य रूपं दृष्टया तत्संख्याज्ञानं तत्फलम् ।।४।।

**अथ वर्णनष्टम्—**

**नष्टाङ्के भागमापूर्त्तेः कुर्य्यादर्धं समे लघुः ।**
**विषमे त्वेकमाधाय विभक्तव्ये गुरुर्भवेत् ।**
**ततो नष्टस्य वृत्तस्य स्वरूपमवबुध्यते ।।५**

अथ तदुपयोगिनष्टमाह—नष्टाङ्के इति। अक्षरादि-प्रस्तारे पञ्चमं षष्ठमन्यद् वा नष्टं किञ्चिच्छन्दः, तत् कीदृग् भवेदिति पृष्टे नष्टस्यादृश्यमानस्य वृत्तस्य संख्याङ्के यावत् वृत्तवर्णपूर्त्तिविभाग कुर्य्यात्। अर्धं यथा स्यात्तथा इत्यर्धार्धं यातं विभज्य गुरुलघु-रूपान् वर्णान् विलिखेत्। ततो वृत्त-स्वरूपं व्यक्ती भवेत्। तद्विभागो द्विधेत्याह—समे इति। विभक्तव्ये नष्टसंख्यके समे सति तं विभज्य लघुर्लेख्यः, विषमे सति तद्विभागासम्भवात्तत्रैकं निक्षिपेत्। सैकैतस्मिन् विभक्तव्ये गुरुर्लेख्यः, समाङ्कविभागे तु गुरुरिति भावः। यथा त्र्यक्षरप्रस्तारे नष्टं पञ्चमं छन्दः कीदृगिति पृष्टे पञ्चानां वैषम्येण विभागासम्भवात् तत्रैकं निक्षिपेत्, जाता षट् तेषां विभागे गुरुः, अथ त्रयाणां वैषम्येन विभागासम्भवात् तत्रैकं निक्षिपेत् जाताश्चत्वारः तेषां विभागे गुरुः, द्वयोः साम्यान्तद्विभागे लघुरिति वृत्तवर्णानामागतत्वादतःपरं न विभाग इति त्र्यक्षरे पञ्चमो भेदो गुरुद्वयैक व्यक्ती भवति (ऽऽ।) यथा चतुरक्षरे षष्ठं वृत्तं नष्टं कीदृगीति पृष्टे षण्णां साम्यात्तद्विभागे लघुः त्रयाणां वैषम्यात्तत्रैकं निक्षिपेत्, तेषां विभागे गुरुर्द्वयोः साम्यात्तद्विभागे लघुः एकस्य विभागासम्भवात्तत्रैकं निक्षिपेत्, जातौ द्वौ तयोर्विभागे गुरुरिति लघुगुरुलघुगुरुरूपश्चतुरक्षरो षष्ठो भेदः गुरुद्वयैकव्यक्ती भवति (ऽ।ऽ।) नष्टफलमाह—तत इति। ततः समविषम-नष्टाङ्कविभागागतलघुगुरुवर्णोपादानादित्यर्थः। **वृत्तसंख्यया वृत्त-स्वरूपज्ञानं नष्टफलमित्यर्थः ।।५।।**

अथ वर्णमेरुः—

कोष्ठान् कृत्वैकैकवृद्धान् द्विमुख्या
नद्यानन्त्यांश्चैकयुक्तान् विदध्यात् ।
मूर्द्धाङ्काभ्यां मध्यमान् संनियुज्या-
देषः प्रोक्तो वर्णमेरुः कवीन्द्रः ॥

सर्वगुर्वादयो ये स्युर्भेदाः प्रसृतजातिषु ।
तत्संख्या वृत्तसंख्य च ज्ञायते वर्णमेरुणा ॥६

अथ वर्णमेरुमाह—कोष्ठानिति । द्वौ कोष्ठौ मुख्यौ आदिमौ येषां तानेकैकवृद्धान् कोष्ठान् कृत्वा । अयमर्थः—एकक्षरादिषु षड्‌विंशत्यक्षरान्तेषु प्रसृतेषु कति भेदाः सर्वगुरवः कत्येकादि लघव एकादिगुरवो वा, कति सर्वं लघवः, का वा प्रस्तारसंख्येति प्रश्ने मेरुणोत्तराय तस्य प्रवृत्तिः, तत्रैकाक्षरादिक्रमेण यावदिष्टं पङ्क्ति-कोष्ठान् कृत्वा तेषु प्रथमादिक्रमेण द्विप्रमुखानेकैकवृद्धान् कोष्ठान् विदध्यात् । तत्र प्रथमे पङ्क्तिकोष्ठे कोष्ठद्वयं, द्वितीये कोष्ठत्रयं, तृतीये कोष्ठचतुष्टयमित्येवमग्रिमेषु बोध्यम् ।

एवं निर्मितेषु कोष्ठेष्वाद्यानन्त्यांश्च कोष्ठानेकाङ्कयुक्तान् कुर्य्यात्, मध्यमान् कोष्ठांस्तु मूर्ध्वकोष्ठद्वयाङ्कावेकीकृत्य तेन सतियुज्यात् पूरयेत् । एष वर्णमेरुः कवीन्द्रैरुक्तः । अस्य फलमाह—सर्वगुर्विति । प्रस्तृतायां जातौ सर्वगुर्वेकादिलघुसर्वलघुरूपा ये भेदाः सन्ति, तेषां संख्यामेरुणा ज्ञायते । मेरुपङ्क्तिकोष्ठस्थै-रुत्तरोत्तरैरंकैः क्रमादिति शेषः । पूर्वपूर्वैस्त्वेकादिगुरूणामिति बोध्यम् । वृत्तसंख्या तु पङ्क्तिस्थ-कोष्ठाङ्कयोगेन ज्ञायते इति यथैकाक्षर-प्रस्तारे आदावेकगुरुरन्ते त्वेक लघुः संख्याद्विकम् ।

द्वयक्षरे त्वादौ सर्वगुरुः स्थानद्वये एक लघुः, अन्ते सर्वलघुः संख्या तु चतुष्कम्। त्र्यक्षरे त्वादौ सर्वगुरुः स्थानत्रये एक लघु स्थानत्रये द्विलघुः, अन्ते सर्वलघुः, संख्या त्वष्टकम्। चतुरक्षरे त्वादौ सर्वगुरुः चतुर्गुरुरन्यत्राभावात्, स्थानचतुष्के त्रिगुरुः स्थानषट्के द्विगुरुः, स्थानचतुष्के एकगुरुः अन्ते सर्वलघुः संख्या तु षोड़शमिति ॥६॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | २ | | | | | |
| २ | १ | २ | १ | ४ | | | | |
| ३ | १ | ३ | ३ | १ | ८ | | | |
| ४ | १ | ४ | ६ | ४ | १ | १६ | | |
| ५ | १ | ५ | १० | १० | ५ | १ | ३२ | |
| ६ | १ | ६ | १५ | २० | १५ | ६ | १ | ६४ |

**अथ वर्णपताका—**

**कृत्वा तावद् भुवि रम्यां पताकाम्।**

**तस्यामुद्दिष्ट १२४८ वदङ्कान् निदध्यात्।**

**पूर्वाङ्केनापूरयन्नुत्तराङ्कं पुच्छे तस्या निक्षिपेत्तं तु वृद्धम् ॥**

**कुर्य्यादेवं त्यक्तवृत्ताधिकाङ्को यावत् प्रस्तार प्रभेदा भवन्ति।**

**एतां ब्रूते वर्णनिष्ठां पताकां सुज्ञैर्गम्यां पिङ्गलो नागराजः ॥७**

मेरौ चतुर्वर्णप्रस्तारस्य षोड़शभेदाः सन्ति, तत्रैकः सर्वगुरुश्चत्वारः त्रिगुरवः षट् द्विगुरवः चत्वार एकगुरवः, एकः सर्वलघुरिति। एवं षोड़शभेदा भवन्ति। तस्मिन् प्रस्तारे कतमस्थाने सर्वगुरुः, कतमस्थाने त्रिगुरुः, कतमस्थाने द्विगुरुः, कतमस्थाने एकगुरुः, कतमस्थाने सर्वलघुः, का का प्रस्तारसंख्येति प्रश्ने पताकया उत्तरं देयमिति तदर्थं पताकामाह—कृत्वेति।

भुवि रम्यां पताकां कृत्वा लिखित्वा तस्यां वर्णोद्दिष्टवदंकान् निदध्यात् अर्पयेत्। यथा चतुर्वर्णप्रस्तारे १२४८ एकद्विचतुरष्टांका वृतवर्णशिरसि भवन्ति, तथा पताकावंशदण्डे ते लेख्या इत्यर्थः। अथ तस्या उद्दिष्टांक-पङ्क्ते रुचिराङ्क पूर्वपूर्वाङ्केन पूरयन् योजयन् सन् तं परपरङ्कं वृद्धं सन्तं तस्याः पताकायाः पुच्छेषु निक्षिपेदधोधः स्थापयेत्, यावत् प्रस्तार-प्रभेदा भवन्ति पूर्य्यन्ते तावदेवं कुर्य्यात् मेरूक्तप्रस्तर-संख्याया पताकाङ्का वर्द्धनीया इत्यर्थः। त्यक्तेति वृत्त आगतो योऽङ्क यश्च प्रस्तारसंख्यातोऽधिक-कलकलं तं त्यजन्निति ॥७॥

चतुर्वर्णपताका

| | | | | |
|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ |
| | ३ | ६ | १२ | |
| | ५ | ७ | १४ | |
| | ९ | १३ | | |
| | | १० | १५ | |
| | | ११ | | |

त्रिवर्णपताका

| | | | |
|---|---|---|---|
| १ | २ | ४ | ८ |
| | ३ | ६ | |
| | | | |
| | | | |
| | ५ | ७ | |
| | | | |

द्विवर्णपताका

| | | |
|---|---|---|
| १ | २ | ४ |
| | | |
| | | |
| | ३ | |
| | | |
| | | |

**सर्वगुर्वादयो भेदा मेरौ ये परिदर्शिताः।**
**तेषां स्थानानि बोध्यन्ते विनान्वेषात् पताकया ॥८**

पताकाफलमाह—सर्वेति। पताङ्क-दर्शनादेव सर्वगुर्वादि-भेदानां स्थानानि ज्ञायन्ते इत्यर्थः। तथाहि—यथा चतुर्वर्णप्रस्तारे १२४८ एकद्विचतुरष्टाङ्का देयाः, अत्रैकाङ्कस्य पूर्वाङ्काभावात् द्वितीयाङ्कमारभ्य पङ्क्तिः पूर्य्यंते, तत्र पूर्वाङ्क एकाङ्क एव, तस्मादुत्तरात् द्वितीयादयः ते चाव्यवहित नत्या पूर्य्याः, तथाहि—एकद्वियोगे त्र्यकः ३, स द्वितीयाधः स्थाप्यः एकचतुर्योगे पञ्चमाङ्कः ५ त्र्यङ्काधः, एकाष्टयोगे नवाङ्कः ९ पञ्चाधः, ततः पङ्क्ति-परित्यागः। मेरौ त्रिगुरु-रूपाणां चतुः संख्या दर्शनात्। अथ

चतुरङ्कास्याधः पूरिता एवेति त्यज्यते, द्विचतुर्योगे षड़ङ्कः ६। चतुरेकाधः स्थाप्यः वृत्तत्वात्, नवचतुर्योगे त्रयोदशाङ्कः १३, सप्ताङ्काधः। द्व्यष्टयोगे दशाङ्कत्रयोदशाङ्को वृत्त एव, ततः पङ्क्तित्यागः। मेरुसंख्यापरिमाणोक्तेः। अथ चतुरष्टयोगे द्वादशाङ्कः १२, अष्टाङ्काधः स्थाप्यः। षड़ष्टयोगे चतुर्दशाङ्काधः। त्रयोदशाष्ट योगेन नाग्रेऽङ्कसञ्चारः, प्रस्तारभेदाधिक्यापत्तेः। अष्टाङ्काग्रे षोड़शांकस्तु सर्वलघुज्ञापनायेति सम्प्रदायः। तथा चतुर्वर्णप्रस्तारे प्रथमो भेदः सर्वगुरुः, द्वित्रिपञ्च अवस्थानभेदास्त्रिगुरवः, चतुःषष्ट-सप्तदशैकादशस्थास्तु द्विगुरवः, अष्टद्वादशचतुर्दशपञ्चदशस्थानस्था एक गुरवः। षोड़शस्थानस्थस्तु सर्वलघुः। प्रस्तारसंख्या तु षोड़शैवेति सर्वान्त्यांकादवगतम्। अनया दिशा षड़्विंशतिवर्ण-पर्य्यन्त पताकरचनविज्ञैर्बोध्यम् ॥८॥

**अथ वर्णमर्कटी—**

**रचयित्वा षट्पङ्क्तीः कोष्ठानपि वर्णसंख्यकांस्तासां।**
**भरपूर्वमेकाद्यैर्द्वयाद्यैर्द्वितीयाञ्च ॥९**

मेरावुक्थादीति षड़्विंशति छन्दांसि सन्ति, तानि किं संख्यकानीति, अथोक्थादिछन्दसां प्रत्येकं भेदाः कति भवन्ति, तत् प्रभेदानामक्षराणि कति, तेषु अक्षरेषु कति गुरूणि कति च लघूनि भवन्ति, तत् प्रभेदानां मात्राः कतीति प्रश्ने मर्कट्योत्तरं देयमिति तदर्थं वर्णमर्कटीं दर्शयति—रचयित्वेति। हे सखे! मर्कटीनिर्मिमाणस्त्वं षट्पङ्क्तीः कृत्वा तासां पङ्क्तीनां वर्णसंख्यान् कोष्ठकानपि कृत्वा षड़्विंशतिवर्णपर्य्यन्तानामुक्थादिवर्णछन्दसां छन्दस्तद्भेदादिषड़्कसंख्या ज्ञातुकामस्त्वं तासु षट्सु पङ्क्तिषु तत् पर्य्यन्तानां वर्णानां यावदिष्टं कोष्ठकान्निर्मायेत्यर्थः। पूर्वां प्रथमां

पङ्क्तिमेकाद्यैरेकद्वित्र्यादिभिरंकैर्भर पूरय। द्व्यादिभिर्द्विगुणितैरंकैः द्वितीयां च पङ्क्तिं भर। प्रथमः कोष्टो द्व्यङ्केन द्वितीयश्चतुरंकेन तृतीयोऽष्टांकेन पूरणीयः। एवमग्रेऽपीत्यर्थः ॥९॥

**प्रथमादिकयोरुभयोर्गुणितैरङ्कैस्तृतीयाञ्च ।**

**अत्र तृतीयाङ्काद्यैस्तुर्यामथ पञ्चमीञ्चापि ।**

**पञ्चम्यङ्कैस्त्रिगुणैः षष्ठीमपि वर्णमर्कटी ह्येषा ॥१०**

उभयोः प्रथमद्वितीयपङ्क्त्योरंकैर्गुणितैस्तृतीयां च पङ्क्तिं भर। प्रथमे कोष्ठे द्व्यंकेन द्वितीयेऽष्टांकेन तृतीये चतुर्विंशत्यंकेन तृतीय-चतुर्थे चतुःषष्ठ्यंकेनेत्येवमादिरीत्या तृतीयां पूरयेत्यर्थः। तृतीयपङ्क्तिमेवं पूरयित्वा तस्यास्तृतीयपङ्क्तेरंकाद्यैश्चतुर्थीं पञ्चमीं च पङ्क्तिं भर। अथ त्रिगुणितैः पञ्चम्याङ्कैः षष्ठीञ्च पङ्क्तिं भरेत्यर्थः। एषा हि ईदृक् लक्षणा-वर्णमर्कटी भवेत् ॥१०॥

**छन्दस्तद्भेदाक्षरगुरु-लघु-कलिका-प्रसंख्यात्री ॥११**

षड्वर्णमर्कटी

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | छन्दः |
| २ | ४ | ८ | १६ | ३२ | ६४ | प्रभेदः |
| | ८ | २४ | ६४ | १६० | ३८४ | वर्णः |
| १ | ४ | १२ | ३२ | ८० | १९२ | गुरुः |
| १ | ४ | १२ | ३२ | ८० | १९२ | लघुः |
| ३ | १२ | ३६ | ९६ | २४० | ५७६ | मात्राः |

मर्कटीज्ञानफलमाह—छन्द इति। तत्र प्रथमया पङ्क्त्या छन्दः संख्या, द्वितीयया तद्भेदसंख्या, तृतीयया तदक्षरसंख्या, चतुर्थ्या गुर्वक्षरसंख्या, पञ्चम्या लघ्वक्षरसंख्या, षष्ठ्या तु कला ज्ञायते इत्यर्थः। यथैकाक्षरमुक्था छन्दः प्रथमं भवति, तस्य द्वौ भेदौ, तस्य त्रिभेदश्च द्वे अक्षरे, तयोरेको गुरु एकं लघु। कलास्तु तिस्रो भवन्ति इति षड्भिः कोष्ठैः क्रमादमी षट् प्रत्ययाः प्रजायन्ते। यथा वा द्व्यक्षरैमत्युक्तुक्था छन्दो द्वितीयं भवति, तस्य चत्वारो भेदाः, अष्टौ वर्णाः, तेषु चत्वारो गुरवश्चत्वारो लघवः कलास्तु द्वादशेति। एषु मध्यादिषु बोध्यम् ॥११॥

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये**

**वर्णप्रस्तारादि-निरूपणाष्टमी प्रभा ॥८॥**

---



# नवमी प्रभा

अथ द्वित्रिचतुःपञ्चषट्कादीनां विनिर्गमे—

**प्रस्तारं खलु मात्राणां पादानां नागनायकः ।**

**तद् भेदा द्वित्रिपञ्चाष्टत्रयो दशमुखाः क्रमात् ।।१**

अथ मात्रावृत्तानां प्रस्तारादिकं वक्तुकामस्तेषामादौ पादमात्रासंख्यामाह—अथेति। यथा वर्णवृत्तानामेकवर्णात् पादादारभ्य वृत्त्यन्य भवन्, तथात्र मात्रावृत्तानामेकमात्रत् पादादारभ्य वृत्तानि भवेयुरित्याह—द्वित्र्यादि। द्विमात्रस्त्रिमात्रश्चतुर्मात्रः पञ्चमात्रः षण्मात्रः। पादौ भवतः। आदिना सप्तमात्रादयो गृह्यन्ते। एकमात्रस्य प्रस्तारा सम्भवात् द्विमात्रादीनामुपादानं, ननु प्रस्तारे सति एषां कति भेदाः स्युरिति चेत्तत्राह—तद्भेदा इति। तेषां द्विमात्रादीनां पादानां भेदा द्व्यादयो भवन्तीत्यर्थः। तत्र द्वमात्रो द्विभेदः, त्रिमात्रस्त्रिभेदः, चतुर्मात्रः पञ्चभेदः, पञ्चमात्रः अष्टभेदः, षण्मात्रः त्रयोदशभेद इत्यर्थः। तथैककला पादस्योदाहरणम् यथा—मधु पिब। द्विकलपादस्य यथा—कृष्णः पायात्। यथा वा, रतिमय भवति ।।१।।

द्विकल-प्रस्तारः

| | |
|---|---|
| ऽ | १ |
| ।। | २ |

त्रिकल-प्रस्तारः

| | |
|---|---|
| ।ऽ | १ |
| ऽ। | २ |
| ।।। | ३ |

**चतुष्कल-प्रस्तारः**

| | |
|---|---|
| ऽऽ | १ |
| ।ऽऽ | २ |
| ।ऽ। | ३ |
| ऽ।। | ४ |
| ।।।। | ५ |

**पञ्चकल-प्रस्तारः**

| | |
|---|---|
| ।ऽऽ | १ |
| ऽ।ऽ | २ |
| ।।।ऽ | ३ |
| ऽऽ। | ४ |
| ।।ऽ | ५ |
| ।ऽ।। | ६ |
| ऽ।। | ७ |
| ।।।। | ८ |

**षट्कल-प्रस्तारः**

| | |
|---|---|
| ऽऽऽ | १ |
| ।।ऽऽ | २ |
| ।ऽ।ऽ | ३ |
| ऽ।।ऽ | ४ |
| ।।।।ऽ | ५ |
| ।ऽऽ। | ६ |
| ऽ।ऽ। | ७ |
| ।।।ऽ | ८ |
| ऽऽ।। | ९ |
| ।।ऽ।। | १० |
| ।ऽ।।। | ११ |
| ऽ।।।। | १२ |
| ।।।।। | १३ |

**विषमकलो लघुः पूर्वं सर्वगुरुः समकलो भवेत् पादः ।**

**तत्र मात्राप्रस्तारः—**

**दत्ताधः प्रथमगुरोर्लघुं विदध्या-**
**दूर्ध्वस्थैः किल सदृशानि शेषकाणि ।**
**ऊने स्याद् गुरुलघुर्वैष मात्रिकाणां**
**प्रस्तारः सकललघुर्न यावदङ्घ्रि ॥२**

अथ मात्राप्रस्तारं लक्षयितुकामः पादस्थापनां दर्शयति— विषमेति। अत्र पादस्थापना द्वेधा भवति। समकलस्य पादस्य सर्वे गुरवः स्थापनीयाः, विषमकलस्य तु एको लघुस्ततो गुरव इति यथा द्विकल-चतुष्कलश्च षट्कलादेः पादस्य सर्वं गुरुतया स्थापनं, द्विकल-त्रिकल-पञ्चकल-सप्तकलादेस्त्वेको लघुस्ततो गुरव इति। ततः प्रस्तार-प्रवृत्तिः। दत्त्वेति—प्रथमस्य गुरोरधस्ताल्लघोः पूर्वमूने स्थाने गुरुः स्यात्, लघुर्वा स्यादिति। ऊनस्य स्थानस्य गुरुणा, पूर्त्तौ गुरुलेख्यं, लघुना पूर्त्तं तु लघु लेख्यमित्यर्थः। यथा पञ्चकलस्य प्रस्तारेऽष्टौ भेदा भवन्ति, तेषु द्वितीयस्य भेदस्य ऊनं स्थानं गुरुणा पूर्य्यते। तृतीयस्योनं तु लघुनेति। यथा च षट्कलस्य पादस्य प्रस्तारे त्रयोदशभेदा भवन्ति, तत्र नवम-भेदस्य ऊनं गुरुभ्यां पूर्य्यते। एकादशस्योनं तु गुरुलघुभ्यां पूर्य्यते। एवं सप्तकलादिपाद-प्रस्तारभेदेषु तु क्वचिद् गुरुभ्यां लघुना गुरुभि लंघुना चोनस्थानपूर्त्तिर्मृग्या। सकललघुरिति भवदङ्घ्रिपादः सर्वलघु नं भवेत् तावदेवं कुर्यादित्यर्थः, यथा वर्णवृत्तप्रस्तारे सर्वभेदाः समवर्णास्तथा मात्रावृत्तप्रस्तारे सर्वभेदाः सममात्रा **भवन्तीति अवधेयम् ॥२॥**

**अथ मात्रोद्दिष्टं—**

**अङ्कं पूर्वाङ्कयुतं दत्वा शीर्षणि लघोरधश्च गुरोः**
**लोपितगुरुशीर्षाङ्कात् मात्रोद्दिष्टं बोध्यमन्त्याङ्कात् ।। ३**

अथ मात्रोद्दिष्टं लक्षयति—अङ्कमिति । लघो शीर्षणि पूर्वाङ्कयुतमङ्कं दत्त्वा गुरोस्तु शीर्षण्यद्यश्च तं दत्त्वाऽन्त्याङ्कात् उद्दिष्टं बोध्यम् । कीदृशादन्त्यङ्कात् लोपितगुरुशीर्षाङ्कात् विलुप्तो गुरुशीर्षाङ्को यस्मात् स तथा तादृशादित्यर्थः । अत्र पूर्वाङ्कयुक्तस्य प्रदानं द्वेधा लघोरुपर्य्येवाङ्क-प्रदानं गुरोस्तूपर्य्यधश्च तदिति । यथा षट्कलस्य प्रस्तारे त्रयोदशभेदा भवन्ति । तेषु आद्यन्तगुरु र्मध्य लघुद्वयश्च भेदो दृष्टः । स च किं संख्याकोऽयमिति केनचित् पृष्टे सति तत्राद्यस्य गुरोरुपरि एकाङ्को देयः । तस्याधो द्वितीयांकः मध्यगतयोर्लघ्वोः प्रथमस्योपरि तृतीयाङ्कः द्वितीयस्योपरि पञ्चम्यङ्कः, अथान्त्यस्य गुरोरुपरि अष्टमाङ्कः अधस्तु त्रयोदशाङ्क इत्यङ्कप्रदानम् । तदनन्तरं अन्त्याङ्कात् त्रयोदशात् गुरुशीर्षाङ्को नवाङ्को लोप्यः । तस्मादुर्वरितश्चतुरङ्क तेन परिज्ञायते चतुर्थ-प्रभेदोयमिति । यथा वा तेष्वेव भेदेषु आद्यन्तलघुर्मध्यगुरुयुग्मः प्रभेदो दृष्टः, तत्राद्य लघूपरि एकाङ्को देयः । मध्ये गतयो गुर्वोः प्रथमस्योपरि द्वितीयाङ्कः अधस्तात्तृतीयाङ्कः, द्वितीयस्योपरि पञ्चमाङ्कः अधस्तादष्टमाङ्कः, अन्त्यलघूपरि तु त्रयोदशाङ्कः । इत्यङ्क-प्रदानानन्तरमन्त्याङ्कात् त्रयोदशाद् गुरुशीर्षगतः सप्ताङ्को लोप्यः । तस्मादुर्वरितः षड्ङ्कः । तेन ज्ञायतेष्वष्टः प्रभेदोयमिति । प्रभेदो स्वरूपं दृष्ट्वा तस्य संख्योद्दिश्यतेऽमुकसंख्याकोऽयमिति । एवमन्यत्रापि बोध्यम् ।।३।।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | ३ | ५ | ८ | | १ | २ | ५ | १३ |
| ऽ | । | । | ऽ | | । | ऽ | ऽ | । |
| २ | | | १३ | | | ३ | ८ | |

अथ मात्रानष्टम्—

मात्राः सर्वाः कला कृत्वा पूर्वयुग्माङ्कसंयुताः ।
अन्त्याङ्को लुप्तपृष्ठाङ्कः पूर्य्यते येन येन सः ॥
तत्र तत्र गुरुं कुर्य्याद् गृहीत्वा तत्परां कलाम् ।
मात्रानष्टमिति ब्रूते पिङ्गलः फणिनायकः ॥४

अथ मात्रानष्टं लक्षयति—मात्रा इति। षट्कलस्य पादस्य त्रयोदशभेदेषु चतुर्थो भेदः कीदृशो भवतीति केनचित् पृष्टः तत्र चतुर्थे भेदः, कीदृशो भवतीति केनचित् पृष्टः तत्र चतुर्थे भेदगुरुलघुरूपा या मात्राः सन्ति, ताः सर्वः कलाः ह्रस्वमात्रा कृत्वा ततः षट्कलाभूतास्ताः पूर्वयुग्माङ्क-संयुताश्च कृत्वा पूर्वांकेन युक्तो योऽकस्तत् युक्तशिरस्काः कृत्वेत्यर्थः। एवं स्थापनायां सत्यां नष्टस्य चतुर्थ-भेदस्य व्यक्तिः कथं स्यादिति तदुपायमाह—अन्त्याङ्ग इति। सोऽन्त्याङ्को लुप्तपृष्टाङ्कः सन् येन येन प्रथमपञ्चकलांकेन पूर्य्यते नवत्व प्राप्नुयात चतुर्थभेदस्य ऽ।।ऽ व्यक्तिः भवति, यस्याः शिरस्यूर्वरितांकः स्थितो दृश्येत तौ कलौ परया सह गुरुं कुर्य्यात्, तदुहाहृत्यस्तु पञ्चमः प्रभेदो द्रष्टव्यः। एवं भेदान्तराण्यपि व्यञ्जनीयानि। द्विकलादीनाञ्च भेदा व्यञ्जनीयाः सुधीभिः॥४॥

अथ मात्रामेरुः—

द्वौ द्वौकोष्ठावेकवृद्धया कृत्वान्त्येष्वेकमर्पयेत् ।
आद्यान्प्रपूरयेदेक द्वेयकद्येकचतुःक्रमात् ॥५

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | २ | ५ | ८ | १३ |
| । | । | । | । | । | । |

अथ मात्रामेरुमाह—द्वाविति। द्वौ द्वौ पङ्क्ति कोष्टौ समौ

लेख्यौ। तदधः पुनरेकवृद्धया द्वौ द्वौ कोष्ठौ समौ लेख्यौ। एकवृद्धयैत्यक्तेर्द्वयोः कोष्ठयोः कोष्ठान्तराणि भवन्तीति सूच्यते। एकवृद्धेचत्येकैकवृद्धेचत्यर्थः। अयमत्र निष्कर्ष—प्रथमे पङ्क्तिकोष्ठे कोष्ठद्वयं, तथा द्वितीयेपि। तृतीये चतुर्थे च कोष्ठत्रयं, पञ्चमे षष्ठे च कोष्ठचतुष्टयं, सप्तमे अष्टमे च कोष्ठपञ्चकम्। एवमेवाग्रेऽपि बोध्यम्। एककलायाः प्रस्तारो नास्तीति कोष्ठद्वयात्मिकैवादौ पङ्क्तिः। इत्थं कोष्ठान् विरचय्य कोष्ठेष्वधोऽधोङ्क-लेखनविधिमाह—अन्त्येष्वेकमिति। अन्त्येषु सर्वेषु कोष्ठेषु एकमङ्कमर्पयेत्। आद्यान् कोष्ठांस्तु एकद्वयेक-त्र्येक-चतुरादिभिः पूरयेत्। तत्राद्येषु प्रथमे एकांक द्वितीये द्वयङ्क तृतीये पुनरेकांकः चतुर्थे त्र्यंकः पञ्चमे पुनरेकांक, षष्ठे चतुरांकः सप्तमे पुनरेकांकः अष्टमे पञ्चमांको देयः। एवमग्रेऽपि। इत्यमन्त्याद्य कोष्ठेष्वंकदानं भवति ॥५॥

**मूर्द्धाङ्क तत् पराङ्कभ्यां तिर्य्यग्भ्यां मध्यगान् भवेत्।**
**मात्रामेरुरयं प्रोक्तः फलं प्राग्वच्च वेदितः ॥६**

अथ मध्यकोष्ठेष्वङ्कदानमाह—मूर्द्धांकेति। पूरणीय-कोष्ठमूर्ध्वकोष्ठस्थौ तिर्य्यग्भूतौ द्वयंकावेकीकृत्य मध्यस्थान् शून्यकोष्ठान् पूरयेदित्यर्थः। ईदृग् लक्षणो द्विमात्रामेरुरुच्यते। एतस्य फलं सुवर्णमेरुवद् भवेदित्याह—फलमिति। द्विकलादीनां मात्राच्छन्दसां स्वप्रस्तारे कति भेदाः, सर्वगुरवः कत्येकादिगुरवः कति, सर्वलघवः कति का वा प्रस्तार-संख्येति प्रश्ने मेरुणाऽनेनोत्तरं देयम्। तथाहि—द्विकलप्रस्तारे द्वावेकगुरु एकः सर्वलघुः प्रस्तारसंख्या तु द्वयम्। चतुष्कलप्रस्तारे एकः सर्वगुरुः द्वय एव गुरवः, एकः सर्वलघुः, संख्या तु पञ्चकं पञ्चकलप्रस्तारे त्रयो द्विगुरवः चत्वार एक गुरवः पञ्चैकगुरवः, एकः सर्वलघुः संख्या तु त्रयोदशकमिति।

एवमन्यत्रापि बोध्यम् ॥६॥

| | | | | |
|---|---|---|---|---|
| १ | २ | २ | | |
| २ | १ | ३ | | |
| १ | ३ | १ | ५ | |
| ३ | ४ | १ | ८ | |
| १ | ६ | ५ | १ | १३ |
| ४ | १० | ६ | १ | २१ |

**अथ मात्रापताका—**

**अङ्कान् मात्रापताकायां लिखित्वोद्दिष्टवत् क्रमात् ।**
**अन्त्याङ्के वामागान् लुम्पन् पुच्छे शिष्टान् समर्पयेत् ॥७**

अथ मात्रापताकामाह—अंकानिति । मात्रापताकायां मात्रोद्दिष्टवदंकान् विलिखेत् । यथा पञ्चकल-प्रस्तारे १२३५८ एकद्वित्रिपञ्चाष्टांका लिख्यन्ते । यथा षट्कलप्रस्तारे १२३५८-१३ एकद्वित्रिपञ्चाष्टत्रयोदशांका लिख्यन्ते । पताकावंशदण्डे मात्रोद्दिष्टरीत्यांकाः स्थाप्या इत्यर्थः । ततः सर्वान्त्यांके तद्वामभागवर्त्तिनोंकान् विलम्पन् तस्मात् शिष्टानुर्वरितान् अंकान् पताकापुच्छेषु अधोऽधः लिखेत् । कुर्य्यादेवं त्यक्तवृत्ताधिकांको यावत् प्रस्तारभेदा भवन्ति । इत्येतदप्यत्रानुस्मर्त्तव्यमिति पताकानिर्माणविधिरुद्दिष्टः ॥७

| १ | २ | ३ | ५ | ८ | १३ |
|---|---|---|---|---|---|
| १ | ३ | | | ८ | १३ |
| | ४ | | | | |
| | ६ | | | १० | |
| | ७ | | | ११ | |
| | ९ | | | १२ | |

| १ | २ | ३ | ५ | ८ | १३ |
|---|---|---|---|---|---|
| १ | २ | | | ५ | |
| | ३ | | | ८ | |
| | ४ | | | १० | |
| | ६ | | | ११ | |
| | ७ | | | १२ | |
| | ९ | | | | |

**एकेनैव गुरुर्लोपे द्वाभ्यां द्विगुरुरीर्य्यते ।**
**त्रिभिस्त्रिगुरुरित्याह फलमस्या भुजङ्गराट् ॥८**

मात्रापताका-फलमाह—एकेनेति। पताकायामेकेनान्त्यांकावयवे लुप्ते एकगुरुर्भेदः द्वाभ्यां तस्मिन् लुप्ते द्विगुरुरीर्य्यते इत्याह—पिङ्गलः। यथा षट्कलप्रस्तारे १२३५८१३ एकद्वित्रि-पञ्चाष्ट-त्रयोदशांका भवन्ति। तेष्वन्त्य त्रयोदशांकस्तद्वामेऽष्टकांक, तेन त्रयोदशांके लुप्ते पञ्चांकः शिष्टः, तस्य पूर्वत्र सत्त्वात् परकलया गुरुभावाच्च पञ्चांकात् पङ्क्तिक्रमः कार्य्यः। तथा पञ्चभिस्त्रयोदशांक लुप्तेऽष्टांकः शिष्टः, स पञ्चमाधः त्रिभिः त्रयोदशांके लुप्ते दशांक शिष्टः, सोऽष्टाधः, द्वाभ्यां त्रयोदशांके लुप्ते ११ एकादशांकः शिष्टः, स दशाधः। एकेन त्रयोदशांके लुप्ते १२ द्वादशांकः शिष्टः, स एकादशाधः मेरावेकगुरुस्थानानां पञ्चत्वान्नाग्रे पङ्क्तिसञ्चारः। अथ द्विगुरुरूपाणि पञ्चाष्टभित्रयोदशलोपे भागाभावात्तद्वामस्थैस्त्रष्टभिस्त्रयोदशलोपे द्व्यंकः शिष्टः, तस्य सत्त्वात् परकलया गुरुभावाच्च, द्व्यंकान द्विगुरुपङ्क्तिक्रमः, द्व्यष्टभिस्तल्लोपे त्र्यंकः शिष्टः, स द्व्यष्टः स द्व्यधः। एकाष्टभिस्तल्लोपे चतुरंकः शिष्टः, स त्र्यधः। पञ्चत्रिभिस्तल्लोपे पञ्चांक शिष्टः। स च वृत्तत्वाच्च स्थाप्यः। पञ्चभिर्द्वाभ्यां च तल्लोपे षड़ंकः शिष्टः, स चतुरधः, पञ्चभिरेकेन च तल्लोपे सप्तांक शिष्टः स षड़धः। द्वित्रिलोपे वृत्त एव। एक त्रिभिस्तल्लोपे नवांक शिष्टः स सप्ताधः, षड़ेव द्विगुरुस्थानानि मेरावुक्तेः। अथ त्रिगुरुरूपाणि त्रिपञ्चाष्टलोपे भागो नास्ति। एकद्विपञ्चलोपोप्यष्टात्मको वृत्तः। एकद्वित्रिलोपो वृत्तः। एक अष्टभिस्तल्लोपे एकांकः शिष्टः, स चाद्ये स्थाने सर्वगुरुरूपमस्ताति बोधकः। एवमन्यत्र बोध्यम् ॥८॥

**अथ मात्रामर्कटी—**

**पङ्क्तीः किल षट् कृत्वा संख्यास्तु कोष्ठकान् विलिखेत् ।**

**एकाद्यङ्कैः प्रथमामुद्दिष्टाङ्कैर्भरेद् द्वितीयाञ्च ।**

**युञ्जीत प्रथमाद्योरंकै प्रभेदगुणितैस्तृतीयाञ्च ॥९**

अथ मात्रामर्कटीमाह—पङ्क्तीरिति। मात्रामर्कट्यां षट् पङ्क्तीः कृत्वा तास्तु मात्रासंख्यकान् कोष्ठान् विलिखेत्। तत्र प्रथमां पङ्क्तिमेकाद्यङ्कैरेकद्वित्रिचतुरादिभिरंकैर्भरेत् पूरयेत्। द्वितीयां पङ्क्तिमुद्दिष्टांकैर्मात्रोद्दिष्टांककैरेकद्वित्रिपञ्चाष्टत्रयोदशांकैक-विंशत्यादिभिर्भरेत् प्रथमाद्योः प्रथमाद्वितीययोः पङ्क्त्योरंकैर्गुणितै स्तृतीयां पङ्क्तिं पुञ्जीत तयोरंकान् गुणयित्वा भरेदित्यर्थः। एकचतुर्नवविंशति चत्वारिंशदष्टहसत्यादिभिः पूरयेदिति यावत् ॥९॥

**बिन्दुमथैकं दत्त्वा कृत्वा द्विगुणितमेवमन्यांश्च ।**

**विमात्रा घटय्य तृतीयांके तच्छेषैः पूरयेत्तुर्य्याम् ॥१०**

अथ चतुर्थपङ्क्तेः पूरणविधिमाह—बिन्दुरिति। प्रथमे कोष्ठे बिन्दुशून्यं अथ द्वितीये कोष्ठे लघु एकं दत्त्वा तमेकं द्विगुणं द्व्यंकं कृत्वा तं द्व्यंकं तृतीयपङ्क्तिस्थाच्चतुरंकाद् विघटय्य दूरीकृत्य तच्छेषेण चतुर्थः कोष्ठः पूर्य्यः। एवमेवाग्रिमाः कोष्ठाः पूर्य्याः, अनया रीत्या चतुर्थीं पङ्क्तिं पूरयेत् ॥१०॥

**तिर्य्यक् तुर्य्याङ्काद्यैः संयुज्यात् पञ्चमीञ्चतुर्थाद्यैः ।**

**मिलितैरंकैः षष्ठी स्यान्मात्रामर्कटी ह्येषा ॥११**

मात्रामर्कटी

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | छन्दः |
| १ | २ | ३ | ५ | ८ | १३ | प्रभेदः |
| १ | ४ | ९ | २० | ४० | ३८ | मात्राः |
| ० | १ | २ | ५ | १० | २० | गुरुः |
| १ | २ | ५ | १० | २० | ३८ | लघुः |
| १ | ३ | ७ | १५ | ३० | ५८ | वर्णाः |

अथ पञ्चमीं पङ्क्तिं तुर्य्यांकाद्यैश्चतुर्थपङ्क्त्यंकवृन्दैः संयुज्याद् भरेत्। तिर्य्यग् यथा स्यात्तथेति भरण-क्रियाया विशेषणम्। अथ चतुर्थाद्योः चतुर्थो पञ्चम्योः पङ्क्त्योर्मिलितैरंकः षष्ठीं च पङ्क्तिं संयुज्यात्। तयोरंकान् युक्ता कृत्वा तां भरेदित्यर्थः। एकत्रिसप्तपञ्चदशत्रिंशदादिभिस्तां पूरयेदिति यावत्। एषा हि मात्रामर्कटी स्यात् ॥११॥

**छन्दः प्रभेदकलिका गुरुलघुवर्णप्रसंख्यात्री ॥१२**

अस्या ज्ञानात् फलमाह—छन्दः प्रभेदेति। यथैककलं छन्दः प्रथमं तस्यैको भेदः, एका कला तस्य गुरुवर्णो नास्तीति बिन्दुदानादवगम्यते। लघुवर्ण एको भवति, तथा वर्णः स एवैक इति। यथा वा द्विकलं छन्दो द्वितीयं भवति, तस्य द्वौ भेदौ द्विभेदस्य तस्य कलाश्चात्रो भवन्ति। गुरुवर्णं एकः, लघुवर्णौ द्वौ संकलनया त्रयो वर्णा इति! एवं त्रिकलादिषु ज्ञेयम् ॥१२॥

सङ्कीर्णच्छन्दांसि प्रकुर्वंतो बहुविधानि चरितानि ।
विष्णोर्नवप्रभोऽयं स्याच्छन्दः कौतुभः प्रीत्यै ॥१३

एवं ग्रन्थार्थं समाप्य एतद् ग्रन्थप्रयत्नस्य भगवत्प्रसाद-फलमाह—सङ्कीर्णेति। सङ्कीर्णानि कृतानि तस्य च्छन्दांसि येभ्यस्तादृशानि बहुविधानि नवरसवन्तिचरितानि प्रकुर्वंतो विष्णोः प्रीत्यै प्रसादाय अयं छन्दः कौस्तुभः स्यात्। कीदृश इत्याह—नव प्रभ इति। नव प्रकर इत्यर्थः। मणिपक्षे नूतन-कान्तिकः॥१३

(अवशिष्टानि छन्दसां लक्षणानि पञ्चदश)

नगण-सगणाङ्कितो जनज-गुरुसंयुतः ।
भवति खलु गुच्छको वसुयति-विभूषितः ॥१

षोड़शकलचरणं भुवि संप्रति
मोदविवर्द्धकमखिलजनं प्रति ।
शेष यमकलघुयुगलमनोहर
मतिरुचि-कोरक-संज्ञं मुरहर ॥२ (अरिनमन्ये)

एकादशकलधारि-बुधजनमानसहारि ।
इदममुकूलमवेहि लघुकमन्तमनुधेहि ॥३

प्रफुल्लिकुसुमाली सलीयमति मोदा ।
जसो रगणना चेत्ततो गुरुयुग्मकम् ॥४

सगणनिधाय जगणविधाय कविसौख्यधाम कलगीतनाम ॥५
द्विपदी परिगदिता सा द्वादशकलयुक्त या ॥६
हारि हरिणमेत्तदमलमस्ति भसनत्ये ल-स रुचि ॥७

नगणतो ररावन्दिरा लगौ ।।८

मुग्धसौरभनामधेहि रसौ जजौ च भरौ यदा ।।९

छन्दस्तु तयौ लौ यदि संफुल्लक नामाश्नुते ।।१०

विद्धि कलितभृङ्गमखिल वन्दिहृदयलोभि ।
पञ्चक यतिधारि भसनजेन नगलशोभि ।।११

भान्तिदम्बरमन्ततो लघुपूर्वतो रसजैश्च वैभवि ।।१२

भणत मुखदेवमिह न-स-ल-शोभि ।।१३

निखिलकविकलितरुचि शुचि नगण-पञ्चकम् ।
यदि तदनु भवति किल गुच्छकमिति ।।१४ गुच्छकभेदोऽयम् ।

भृङ्गारमेतच्चतुर्भिश्च तैर्विद्धि ।।१५

(एतानि प्राकृत-पिङ्गलानुसारिणि दुर्गेश्वरभट्टेन
विरचितानि बोध्यानि ।)

द्विजकुलतिलकः श्रीमान् राधादामोदरो हरेः प्रेष्ठः ।
स्वर्णैः सूत्रैर्ग्रथित छन्दः कौस्तुभमिमं व्यतोनीत् ।।१४

वेदर्त्तु-पक्षसंख्यताश्छन्दसां व्यक्तयोऽत्र याः ।
लिखिताः सन्तः कलयन्तु कृपाकुलाः ।।१५

इति छन्दः कौस्तुभे मात्राप्रस्तारो नाम नवमीप्रभा ।।९।।

श्रीश्रीमद् गुरवे समर्पणमस्तु ।।

अथ स्वनाम-निर्द्देशपूर्वक-ग्रन्थमुपसंहरति—द्विजेति। श्रीमान् राधादामोदरः छन्दः कौतुस्भमिमं व्यतनीदकरोदित्यर्थः। कीदृशमित्याह—स्वर्णैरिति। स्वर्णानि विक्षराणि यानि सूत्राणि लक्षणानि तैर्ग्रथितं निर्मितम्। मणिपक्षे कनकजेरकगुम्फितम् ॥१४॥

अथैतद् ग्रन्थोक्तानि छन्दांसि परिगणयति—अङ्कानां वामगत्या स्थापनात् चतुःषट्सूत्तरं शतद्वयमिह छन्दांसि गुण-पक्ष पक्षसंख्यानि २२३। मात्रा छन्दांसि चन्द्राब्धि-संख्यानि ४१। उभयानि तु वेदर्त्तुपक्षसंख्यानीति च २६४ ॥१५॥

**इति श्रीविद्याभूषण-विरचिते छन्दः कौस्तुभभाष्ये मात्राप्रस्तारादि-निरूपणा नवमी प्रभा ॥९॥**

—:+:—



# परिशिष्टम्



**छन्दो मञ्जर्य्यां विशेषः—**

षड़क्षरायां वृत्तौ—(१) 'विद्युल्लेखा' मो मः।

अष्टाक्षरायां— (२) नभलगा 'गजगतिः'।

**छन्दः परिशिष्टे विशेषः—**

नवाक्षरायां वृत्तौ—(३) 'भद्रिका भवति रो नरौ।

(४) द्विगुण-नगण-सहितः सगण इह विदितः।
फणिपतिमतिविमला क्षितिप भवति 'कमला'॥

(५) अङ्कोन्माना वर्णा यत्र स्युः
सर्वे दीर्घाः सर्वे नोक्तम्।
'रूपामाली' संज्ञं तद् वृत्तम्
यस्मिश्चेतः केषामुद्वृत्तम्॥

त्रयोविंशत्यक्षरायां—(६) इह 'सुन्दरिका' पिङ्गलमुनिनोक्ता
स द्वयतो भसता ज्लभगाः।

चतुर्विंशत्यक्षरायां—(७) धाम'किरीट'मिदं भगणा यदि
पिङ्गलनागमुनीन्द्र-मतं किल।

(८) सगणैरिह वृत्तवरं वसुभिः किल 'दुर्मिल'मुक्तमिदं कविभिः।

**वृत्तरत्नाकरे विशेषः—**

दशाक्षरायां वृत्तौ—(९) तो जौ गुरुणेय'मुपस्थिता'।

(१०) एकाक्षरायां 'उपचित्र'मिदं सप्तसाल्लगौ।

(११) 'कुर्पुरुष-जनिता' ननौ गौ गः।

(१२) 'अनवस्थिता' न्यौ भगौ गुरुस्न्ते।

वृत्तरत्नाकरपरिशिष्टे विशेषः—

दशाक्षरायां वृत्तौ—(१३) 'दीपकमाला' भ्मौ मतां जगौ।
(१४) ज्ञेया 'हंसी' भ-ग-न-ग-युता।

एकादशाक्षरायां—(१५) 'विध्वङ्कमाला' भवेत्तौ तगौ गः।
(१६) रेण जेन सेन लगयो'र्द्रुता'।
(१७) नररलैर्गुरा'विन्दिरा' मता।

द्वादशाक्षरायां—(१८) पञ्चमुनि भ्मौ स्यात् सयुता 'ललना'
(१९) ललितमभिहितं नौ म्रौ नामतः।
(२०) 'द्रुतपदं' भवति नभनयाश्चेत्।
(२१) सर्वेमा यस्मिन् सोऽयं 'विद्याधारः' स्यात्।
(२२) लघुर्गुरुर्वदन्ति 'पञ्चचामरम्'।
(२३) 'सारङ्ग' संज्ञं समस्तैस्तकारैस्तु।
(२४) 'मोटकं' नाम समस्त भमीरय।
(२५) रविलघु 'तरलनयन'मिह।

त्रयोदशाक्षरायां—(२६) यमौ रौ विख्याता 'चञ्चरीकावली' गः।
(२७) नसरयुगगौ 'श्चन्द्ररेख'र्त्तुलोकैः।
(२८) 'कुटजगति' र्नजौ सप्तर्त्तुमतौ गुरुः।
(२९) जतौ सजौ गो भवति 'मञ्जुहासिनी'।
(३०) इह 'कन्दुक' यत्र येभ्यश्चतुर्भ्यो गः।

चतुर्दशाक्षरायां—(३१) ननतजगुरुगैः सप्तयति'र्नंदी' स्यात्।
(३२) 'लक्ष्मी' रत्न-विरामा म्सौ तनौ गुरुयुग्मम्।
(३३) त्रिननगगिति वसुयति 'सुपवित्रम्'।
(३४) 'मध्यक्षामा' युगदशविरामा म्मौ न्यौ गौ।
(३५) युगदिग्भिः 'कुटिल'मिति समौ न्यौ गौ चेत्।

(३६) नजभजला गुरुश्च भवति 'प्रमदा'।
(३७) सजसा यलौ गिति शरग्रहै'र्मञ्जरी'।
(३८) नजभजरौ गुरुश्च वसुपट'कुमारी'।
(३९) नरनरैर्लगौ च रचितं 'सुकेशरम्'।
(४०) म्भौ न्यौ लगौ चेदिह भवतः च 'नजौरसः'।
(४१) 'वासन्तीयं' स्यादिह खलु मतौ न्यौ गौ चेत्।
(४२) 'चक्रपद'मिह भनननलगुरुभिः।

पञ्चदशाक्षरायां—(४३) ननतभर कृताष्टस्वरै'रूपमालिनी'।

(४४) कथयन्ति 'मानसहंस' नाम सगौ जभराः।
(४५) सगणैः शिववक्रमितैर्गदिता 'नलिनी'।
(४६) शंस 'निशिपालक'मिदं भजसनाश्च रः।

षोड़शाक्षरायां वृत्तौ—

(४७) संकथिता भरौ नरनगाश्च 'धीरललिता'।
(४८) नजरभभेन गेन च स्यान् 'मणिकल्पलता'।
(४९) यस्मिन् सर्वे गा राजन्ते 'ब्रह्माद्यं' तद् रूपं नाम।
(५०) भो रयना नगौ च यस्यां 'वरयुवति'रियम्।

सप्तदशाक्षरायां—

(५१) रसयुगहययुङ् नौ म्रौ सो लगौ हि यदा 'हरिः'।
(५२) भवेत् 'कान्ता' युगरसहयै र्यमौ नरसा लगौ।
(५३) ससजै'रतिशायिनी' मता भजयरैर्गुरुभ्याम्।
(५४) अवेहि 'पञ्चचामरं' जरौ जरौ जगौ लघुश्च।

अष्टादशाक्षरायां—

(५५) मात् सो लौ भर-संयुतौ करिवाणहयै'र्हरिणप्लुता'।
(५६) पञ्च-म-कारयुताऽश्वगति यदि चान्त्य सरचिता।
(५७) 'सुधा' तर्कैस्तर्कैर्भवति ऋतुभि र्यो मो नसतसाः।
(५८) वर्णाश्वैर्मननततमकैः कीर्त्तिता 'चित्रलिखे'यम्।

(५९) भाद् रनना नसौ 'भ्रमरपदक'मिदमभिहितम्।
(६०) 'शार्दूल' वद मासषट्क यति मः सो जसौ रो मश्चेत्।
(६१) अर्थाश्वाश्वैर्म-भनयरयुगैर्वृत्तं मतं 'केसरम्'।
(६२) म्मौ न्जौ स्रौ चे'च्चल'मिदमुदितं युगैर्मुनिभिः स्वरैः।
(६३) सैका वसुविरतिस्तनौरैश्चतुर्भिर्युता 'लालसा'।
(६४) भवति नयुगलं रभौ रौ दशभि'र्गजेन्द्रलता'।
(६५) तद् भूतर्त्वश्वै-र्मो विरतिश्चेत् 'सिंहविस्फूर्जितं' यौ।
(६६) स्नौ जजौ भर-संयुतौ करिवाणखै'र्हरनर्त्तनम्'।
(६७) इदं 'क्रीड़ाचक्रं' सदीर्घं समस्तैर्यकारैः समेतम्।
(६८) वेदाङ्गान्तैर्मभन ययुगैः स्यादियं 'चन्द्रलेखा'।
(६९) 'हिरक'मुदितं भसनजनैरिह रगणोऽन्ततः।

ऊनविंशत्यक्षरायां—

(७०) नयुगल-ग-लघू निरन्तरै यदा स 'पञ्चचामरः'।
(७१) वृत्तं 'बिम्बाख्य' सरमुनितुरगै-र्भ-तौ न्सौ ततो चेद् गुरुः।
(७२) रसैः षड्भिर्लोकैर्यभनससजाः गुरु'र्मकरचन्द्रिका'।
(७३) इनाश्वैः स्याद् यमनयजजगाः कीर्त्तिता 'मणिमञ्जरी'।
(७४) गजाब्धितुरगैर्जसौ जसतमा गश्चेत् 'समुद्रतता'।

विंशत्यक्षरायां वृत्तौ—

(७५) ख्याता पूर्वैः 'सुवंशा' यदि भरभना सद्वयं गो गुरुश्च।
(७६) सभरा न्मौ यलगास्त्रयोदशयति'र्मत्तेभविक्रीड़ितम्'।

दण्डके—

(७७) यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धोऽपरदण्डकः 'सिंहविक्रीड़' नामा।
(७८) स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः कविः स दण्डकः स्मृतो 'जयत्यशोकमञ्जरी'।

(७९) नयुगल-गुरुयुगेवं यकाराः कवीच्छानुरोधात्, तदा यत्र वक्ष्यन्ते एषोऽपरो दण्डकः पण्डितैरीरितः 'सिंहविक्रान्त' नामा।

अर्द्धसमवृत्तौ—

(८०) अयुजि ननभभाः समकेऽपि तु नयुग-रयुगलं तदा 'कौमुदी'।

(८१) यदि विषमे भवतो नज जरौ सजयाः समे तु रलौ गौ 'मञ्जुसौरभम्'।

छन्दो मञ्जर्यां वक्त्रप्रकरणे (अनुष्टुभ्)—

(८२) पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरु षष्ठञ्च जानीयात् शेषेष्वनियमो मतः॥
प्रयोगे प्रायिकं प्राहुः केऽप्येतद् वक्त्रलक्षणम्।
लोकेऽनुष्टुविति ख्यातं तस्याष्टाक्षरता मता॥

---



## श्रीहरिदास शास्त्री सम्पादित ग्रन्थावली

१। वेदान्तदर्शनम् 'भागवतभाष्योपेतम्' ८०, २। श्रीनृसिंहचतुर्द्दशी २, ३। श्रीसाधनामृतचन्द्रिका ४, ४। श्रीगौरगोविन्दार्चन पद्धति ३.५०, ५। श्रीराधाकृष्णार्चन दीपिका २, ६-८। श्रीगोविन्दलीलामृतम् १०१.५०, ९। ऐश्वर्यकादम्बिनी ५, १०। सङ्कल्पकल्पद्रुम ५, ११-१२। चतुःश्लोकीभाष्यम् एवं श्रीकृष्णभजनामृत ५, १३। श्रीप्रेमसम्पुट ५, १४ भगवद्भक्तिसारसमुच्चय ५, १५। व्रजरीतिचिन्तामणि १५, १६। श्रीगोविन्दवृन्दावनम् १.५०, १७। श्रीकृष्णभक्तिरत्नप्रकाश १०, १८। श्रीहरेकृष्णमहामन्त्र १, १९। हरिभक्तिसारसंग्रह १५, २०। धर्मसंग्रह ४, २१। श्रीचैतन्य सूक्तिसुधाकर ४, २२। श्रीनामामृतसमुद्र .५०, २३। सनतकुमार संहिता ५, २४। श्रुतिस्तुति व्याख्या २०, २५। रासप्रबन्ध ५, २६। दिनचन्द्रिका २, २७। श्रीसाधनदीपिका २०, २८। स्वकीयात्वनिरास परकीयात्वप्रतिपादन ३०, २९-३०। श्रीराधारससुधानिधि (मूल) १, (मूलानुवाद) ५४, ३१। चैतन्यचन्द्रामृतम ६, ३२। श्रीगौराङ्गचन्द्रोदयः ६, ३३। श्रीब्रह्मसंहिता २७, ३४। भक्तिचन्द्रिका १२, ३५। प्रमेयरत्नावली एवं नवरत्न १३, ३६। वेदान्तस्यमन्तक १३, ३७। तत्त्वसन्दर्भः २०, ३८। भगवत्सन्दर्भः ३८, ३९। परमात्मसन्दर्भः ५०, ४०। कृष्णसन्दर्भः ८०, ४१। भक्तिसन्दर्भः ८०, ४२। प्रीतिसन्दर्भः ७०, ४३। दशश्लोकी भाष्यम् २५, ४४। श्रीभक्तिरसामृतशेषः ५५, ४५। श्रीचैतन्यभागवत १०१, ४६। श्रीचैतन्यचरितामृतमहाकाव्यम् ७५, ४७। श्रीचैतन्य मङ्गल ७५, ४८। श्रीगौराङ्गविरुदावली १८, ४९। श्रीकृष्णचैतन्य चरितामृतम् ४८, ५०। सत्सङ्गमः २०, ५१। नित्यकृत्यप्रकरणम् ३०,

५२। श्रीमद्भागवत प्रथमश्लोक २५, ५३। गायत्रीव्याख्याविवृति ५, ५४। श्रीहरिनामामृत-व्याकरणम् १०५, ५५। श्रीकृष्णजन्मतिथि विधिः ६.५०, ५६-५८। श्रीहरिभक्तिविलासः १८०, ५९। काव्य-कौस्तुभः ३०, ६०। श्रीचैतन्यचरितामृत १०५, ६१। अलङ्कारकौस्तुभ १२५, ६२। श्रीगौराङ्गलीलामृतम् ५, ६३। शिक्षाष्टकम् २, ६४। संक्षेप श्रीहरिनामामृतव्याकरणम् २५, ६५। प्रयुक्ताख्यात-मञ्जरी २, ६६। छन्दः कौस्तुभः २५।

**वङ्गाक्षरमें मुद्रित ग्रन्थ**

१। श्रीबलभद्रसहस्रनामस्तोत्रम् २, २। दुर्लभसार ३.५०, ३। साधकोल्लासः १५, ४। भक्तिचन्द्रिका १२, ५-६। श्रीराधारससुधा-निधि (मूल) २, (सानुवाद) ६, ७। भगवद्भक्तिसारसमुच्चय ५, ८। भक्तिसर्वस्व ५, ९। मनःशिक्षा ५, १०। पदावली १०, ११। श्रीसाधनामृतचन्द्रिका ४.५०।

---

**आगामी प्रकाशन**

१। वृहद्भागवतामृतम् २। लघु भागवतामृतम् ३। उज्ज्वल-नीलमणि ४। वेदान्तदर्शन (सटीक, सानुवाद) श्रीबलदेवविद्याभूषण कृत भाष्ययुक्त ५। श्रीगोपालतापनी उपनिषत् ६। श्रीमद्भागवत (सप्त टीका समन्वित) ७। श्रीगौराङ्गचम्पू ८। श्रीकृष्णभावनामृत ९। सिद्धान्तरत्न (सटीक)

सद्ग्रन्थ प्रकाशक :

**श्रीहरिदासशास्त्री**

**श्रीगदाधरगौरहरि प्रेस**

श्रीहरिदास निवास, कालीदह, वृन्दावन,